र्हिंनं क्लिनं च। म्रु वाणि। म्रुवाव। म्रु वाम। म्रहि म्र ताद्य। म्र तं म्र न। म्रतु। म्र ताद् वा। म्र तां। म्र वंतु। म्रवै। म्रवावहे। म्रवामहे। म्र ष्व। म्रु वाथां म्रु ध्वं। म्र तां म्रु वातां। म्रु वता॥ इत्यदादिः॥

दिवु क्रीडाजयेच्छापणिद्युतिगतिषु। उकारो वेदर्थः। पूर्ववत्ढादयः। दिवादेः श्यः। इति मध्ये श्यः। शपोऽपवादः। शकारः शित्कार्यार्थः। तेन "ष्युङः" इत्येष न भवति "हल्यनकुर्छुरः" इति दीर्घ। दीव्यामि। दीव्यावः। दीव्यामः इत्यादि। व्यतिदीव्ये। व्यतिदीव्यावहे। व्यतिदीव्यामहे। इत्यादि। ञषूङ् प्राणिप्रसवे। ऊकारोकारङकारा इतः। धादेः ष्णोऽष्ठ्याद्विष्वस्कः ष्वमिनि षकारस्य सकारः। सूये। सूयावहे। सूयामहे। इत्यादि। णहौञ् बधने। औकारञकारावितौ। धादेः ष्ण इत्यादिना णकारस्य नकारः। नह्यामि। नह्यावः। नह्यामः। इत्यादि। नह्ये। नह्यावहे। नह्यामहे इत्यादि। अङि—प्राग् धोः सम्प्रयोगः। समदीव्यं। समदीव्याव। समदीव्याम। इत्यादि। व्यत्यदीव्ये। व्यत्यदीव्यावहि। व्यत्यदीव्यामहि। इत्यादि। प्रसूये दीर्घ। प्रासूये। प्रासूयावहि। प्रासूयामहि। इत्यादि। समनह्य। समनह्याव। समनह्याम। इत्यादि। समनह्ये। समनह्यावहि। समनह्यामहि इत्यादि। टिङि-दीव्येय। दीव्येव। दीव्येम। इत्यादि। व्यतिदीव्येय। व्यतिदीव्येवहि। व्यतिदीव्येमहि। इत्यादि। प्रसूयेय। प्रसूयेवहि। प्रसूयेमहि। इत्यादि। सनह्येयं। संनह्येव। सनह्येम। इत्यादि। सन्नह्येय। सन्नह्येवहि। सन्नह्येमहि। इत्यादि। ठोटि-परिपूर्वः। परिदीव्यानि। परिदीव्याव परिदीव्याम। इत्यादि। व्यतिदीव्यै। व्यतिदीव्यावहै। व्यतिदीव्यामहै। इत्यादि। प्रसूयै। प्रसूयावहै। प्रसूयामहै। इत्यादि

७१६॥ व्यंवरोऽन्दुरो विहृतः। ५। ४। १

दुर्गानिताद् गेरत शब्दान्च परस्य विकृतेर्नकारस्य णकारो भवति। इति ण त्व। परिणह्यानि। परिणह्याव। परिणह्याम। इत्यादि। परिणह्य। परिणह्यावहै। परिणह्यामहै। इत्यादि। इति दिवादिः॥

पूत्र अभिषव। मथन पीडन वाऽभिषवः। ञकार इत्। ष्वादेः ष्ण इत्यादिना सकार। पूर्ववल्लडादय.।

७१७॥ स्वादेः श्नुः।२।१।८७।स्वादिभ्यो धुभ्यः कर्तरि ग परत श्नुर्विकरणो मध्ये भवति। शकारः शित्कार्यार्थः। तेन-गे पाति ङिद्वद्भावादेप् न भवति। उतोऽस्कादिति वर्तमाने-

७१८॥ वा म्वोः खं।४।४।१०९। असकारपरो य उकारस्तदन्तस्य गोनिमित्तभूतस्य ख वा भवति वकारादौ मकारादौ च परत॰। इति पक्षे उतः ख। एव वहिमहोरपि। सुनोमि। सुन्वः सुनुवः सुन्मः। सुनुम। सुनोषि। सुनुथः, सुनुथ। सुनोति। सुनुतः सुन्वति। सुन्वे। सुन्वहे। सुनुवहे। सुन्महे। सुनुमहे। सुनुषे। सुन्वाथे। सुनुध्वे। सुनुते। सुन्वाते। सुन्वते। अशूङ् व्याप्तौ। ऊकारः ङकारावितौ। न शादिति नकारस्य णत्वनिषेधः। अश्नुवे। अश्नुवहे। अश्नुमहे। अश्नुषे। अश्नुवाथे। अश्नुध्वे। अश्नुते। अश्नुवाते। अश्नुवते। चिञ् चयने। चिनोमि। चिन्वः। चिनुवः। चिन्मः चिनुमः। चिनोषि। चिनुथः। चिनुथ। चिनोति। चिनुत। चिन्वति। चिन्वे। चिन्वहे। चिनुवहे। चिन्महे। चिनुमहे चिनुषे चिन्वाथे। चिनुध्वे। चिनुते। चिन्वाते। चिन्वते। लङि असुनव, असुन्व, असुनुव असुन्म। असुनुम। असुनोः। असुनुत। असुनुत। असुनोत्। असुनुताम्। असुन्वन्। असुन्वि। असुन्वहि असुनुवहि। असुन्महि। असुनुमहि। असुनुथाः। असुन्वाथाम्। असुनुध्वम्। असुनुत। असुन्वाताम्। असुन्वत। आश्नु-

व्यश्नवामहै । व्यश्नुष्व । व्यश्नुवाथां । व्यश्नुध्वं । व्यश्नुतां व्यश्नुवातां । व्यश्नुवतां ॥ निश्चिनवानि । निश्चिनवाव । निश्चिनवाम । निश्चिनु । निश्चिनुतात् वा । निश्चिनुतं । निश्चिनुत । निश्चिनोतु । निश्चिनुताद्वा । निश्चिनुतां । निश्चिन्वतु । निश्चिनवै । निश्चिनवावहै । निश्चिनवामहै । निश्चिनुष्व । निश्चिन्वाथां । निश्चिनुध्व । निश्चिनुतां । निश्चिन्वातां । निश्चिन्वता । इति स्वादिः ।

तुदोऽ व्यथने—अकारौकारावितौ ।

७२१ ॥ तुदश्शः २ । १ । ९१ । तुदादिभ्यो धुभ्यः कर्तरि गे शो भवति । शपोऽपवादः । शकारः शित्कार्यार्थः । तेन गेऽपीति ङित्वात् "म्युकः" इत्येप् न भवति । तुदामि । तुदावः तुदामः । इत्यादि । तुदे । तुदावहे । तुदामहे । इत्यादि । मृ प्राणत्यागे । शदेगार्द् । इति वर्तमाने—

१२२ ॥ मुर्लुङ्लिङोश्च । १ । २ । ६९ । म्रियतेर्गेपराल्लुङ्लिङोश्च दो भवति । रीङ् ऋतः" इति वर्तमाने—

७२३ ॥ रिङ् यग्लिङ्क्षे । ५ । २ । १५० । गोर ऋकारांतस्य रिङादेशो भवति । यकि यकारादावगे लिङि शे च परतः । इति रिङादेशः । म्रिये । म्रियावहे । म्रियामहे इत्यादि । मुचॢञ् मोक्षणे । लकारञकारावितौ ।। "इदितोर्नुम्" इत्यधिकृत्य—

७२४ ॥ शे मुचां । ५ । १ । ३८ । मुचादीनां शे परतो नुम् भवति । मुंचामि । मुंचावः मुंचामः इत्यादि । मुंचे । मुंचावहे मुंचामहे । इत्यादि । लङि—अतुदं । अतुदाव । अतुदाम । इत्यादि । अतुदे । अतुदावहि । अतुदामहि । इत्यादि । अम्रिये । अम्रियावहि । अम्रियामहि । इत्यादि । अमुंचं । अमुंचाव । अमुंचाम । इत्यादि । अमुंचे । अमुंचावहि । अमुंचामहि । इत्यादि । लिङि—तुदेयं । तुदेव ।

तुदेम । इत्यादि । तुदेय तुदेवहि । तुदेमहि । इत्यादि । म्रियेय । म्रियेवहि । म्रियेमहि । इत्यादि । मुंचेय मुंचेव । मुचेम । मुंचेय । मुंचेवहि । मुचेमहि । इत्यादि । लोटि—तुदानि तुदाव तुदाम । इत्यादि । तुदै । तुदावहै । तुदामहै । इत्यादि । म्रियै । म्रियावहै । म्रियामहै । इत्यादि । मुचानि मुचाव । मुंचाम । इत्यादि । मुचै । मुचावहै । मुचामहै । इत्यादि ।

इति तुदादिः ॥

रुधिर्‌ आवरणे । इरादेरितो निवृत्तिः ।

७२५ ॥ रुधां श्नं । २ । १ । ९२ । रुधादीनां कर्त्तरि गे परतः श्नं भवति । शपोऽपवादः । मकारो देशविध्यर्थः । शकारः शित्कार्यार्थः । तेन ङित्वादेवभावः । णत्व । गेऽतः क्ङितीति वर्तमाने—

७२६ ॥ श्नऽसः खं । ४ । ४ । १०८ । श्नमो निकरणस्यास्तेश्च गोऽरतः ख भवति गे क्ङिति परतः । चर्त्वे ।

७२७ ॥ अधः । ५ । ३ । ५७ । दधातिरन्यस्माद् झषन्तात् परयोः तथोर्धत्व भवति । इति धत्व । झशो जश् झशीति पूर्वस्य दत्वं । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुणत्सि । रुन्द्धः । रुन्द्ध । रुणद्धि । रुन्द्धः । रुन्धन्ति । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुन्त्से । रुन्धाथे । रुन्द्ध्वे । रुन्द्धे । रुन्धाते । रुन्धते । भुजो रक्षाशनयोः । ओकार इत् । कैदितो दा इति वर्तमाने—

७२८ ॥ भुजोऽत्रे । १ । २ । ७५ । न त्रायते न पाऽयतीत्यत्रः । अभिनवेऽत्रातरि वर्तमानात् भुजेर्दो भवति । चोः कुत्वं घत्वे । भुञ्जे । भुञ्ज्वहे । भुञ्ज्महे । भुङ्क्षे । भुञ्जाथे । भुङ्ग्ध्वे । भुङ्क्ते । भुञ्जाते । भुञ्जते ॥ युजिर्‌ योगे । इरादिरित् । युनज्मि ।

वहे । भुनज्महे । भुंक्ष्व । भुंजाथां । भुग्ध्वं । भुक्ता । भु-
ञ्जाता । भुञ्जता । युनजानि । युनजाव । युनजाम । युग्धि,
युक्तात् वा । युंक्त । युक्त । युनक्तु, युंक्तात् वा । युक्ता ।
युंजन्तु । युनजै । युनजावहै । युनजामहै । युंक्ष्व । युञ्जाथां । युग्ध्वं ।
युक्ता । युञ्जाता । युञ्जता । इति रुधादिः ॥

तनुञ् विस्तारे । ञकारोकारावितौ ।

७३१ ॥ कृञ्तनादेरुः । ३ । १ । ७९ । कृञस्तनादि-
भ्यश्च कर्त्तरि गे परत उर्विकरणो भवति । शपोऽपवादः । तस्य
पित्त्वेऽपि नापित्सु । वकारमकारादौ "वा म्वोः ख" इति उकारस्य ख ।
तनोमि । तन्वः । तनुवः । तन्मः । तनुमः । तनोषि । तनुथः ।
तनुथ । तनोति । तनुतः । तन्वन्ति । तन्वे । तन्वहे । तनुवहे ।
तन्महे । तनुमहे । तनुषे । तन्वाथे । तनुध्वे । तनुते । तन्वाते ।
तन्वते । मनुङ् बोधने । ङकारोकारावितौ । मन्वे । मन्वहे ।
मनुवहे । मन्महे । मनुमहे । इत्यादि ॥ डुकृञ् करणे । डुकारञकार-
त्वावितौ । उर्विकरणे गुणे रपि च कृते "कुर्यि च" इति वर्त्तमाने—

७३२ ॥ गेऽनः करोतेस्तूपरः । ४ । ४ । १०७ । गे ङिति
परतः करोतेरकारस्तस्यात उकारादेशो भवति । तकारात्परोऽप् न
भवति । "वा म्वोः ख" इति वर्त्तमाने–

७३३ ॥ कुर्यि च । ४ । ४ । १०६ । करोतेः परस्य उनः
ख नित्यं भवति यकारादौ म्वोश्च परतः । करोमि । कुर्वः । कुर्मः ।
करोषि । कुरुथः । कुरुथ । करोति । कुरुतः । कुर्वन्ति । कुर्वे ।
कुर्वहे । कुर्महे । कुरुषे । कुर्वाथे । कुरुध्वे । कुरुते । कुर्वाते । कुर्वते ।
ण्यक्ति-सम्-पूर्वः । समतनवम् । समतन्व । समतनुव । समतन्म ।
समतनुम । समतनोः । समतनुतं । समतनुत । समतनोत् । समत-

युङ्व । युञ्ज्म । युनक्षि । युङ्क्थ । युङ्क्थ । युनक्ति । युक्त । युञ्जति ।

७२९ ॥ ग्युयुडोऽयज्ञपात्रे । १।२ । ७३ । निपूर्वादुदूपूर्वाच्च युजेरयज्ञपात्रे दो भवति । प्रयुङ्क्ते । प्रयुञ्ज्वहे । प्रयुञ्ज्महे । इत्यादि । उद्युङ्क्ते । उद्युञ्ज्वहे । उद्युञ्ज्महे । इत्यादि । नियमार्थमुद्ग्रहणं । हल्तेपूद एव नान्यस्माद् ।तन-निर्युनक्मि । इत्यादि । लङि-हल्ङ्याब्भ्य । सुसिप्स्यनजिति सिप खे पूर्वस्य च जश्त्वे सिपि रिर्वेति वर्तमाने—

७३० ॥ दः । ५ । ३ । ११० । धोर्दकारान्तस्य पदस्य रिर्वा भवति सिपि परतः पक्षे द एव । अरुणः । अरुन्ध । अरुन्ध्म । अरुणं । अरुणत् वा । अरुन्द्ध । अरुन्द्ध । अरुणत । अरुन्द्धा । अरुन्धन् । अरुधि । अरुन्द्वहि । अरुन्द्महि । अरुद्धाः । अरुधाथां । अरुध्वं । अरुद्ध । अरुधाता । अरुन्धत । अभुजि । अभुञ्ज्वहि । अभुञ्ज्महि । अभुङ्क्था । अभुञ्जाथां । अभुङ्ग्ध्वं । अभुङ्क्त । अभुञ्जाता । अभुञ्जत । अयुनजं । अयुञ्ज्व । अयुञ्ज्म । अयुनक् । अयुक्त । अयुक्त । अयुनक् अयुक्ता, अयुञ्जन् । अयुञ्जि । अयुञ्ज्वहि । अयुञ्ज्महि । अयुङ्क्थाः । अयुञ्जाथां । अयुग्ध्वं । अयुक्त । अयुञ्जाता । अयुञ्जत ॥ लिङि— रुध्या । रुध्याम । रुध्याव । इत्यादि । रुधीय । रुधीवहि । रुधीमहि । इत्यादि । भुञ्जीय । भुञ्जीवहि । भुञ्जीमहि । इत्यादि । युञ्ज्या । युञ्ज्याव युञ्ज्याम । युञ्जीय । युञ्जीवहि । युञ्जीमहि । इत्यादि । लोटि । रुणधानि । रुणधाव । रुणधाम । रुन्द्धि । रुन्द्धात् वा । रुन्द्ध । रुन्द्ध । रुणद्धु । रुन्द्धात् वा । रुन्द्धां । रुन्धन्तु । रुणधै । रुणधावहै । रुणधामहै । रुन्त्स्व । रुन्धाथां । रुन्द्ध्वं । रुन्द्धां । रुन्धातां । रुन्धतां । भुनजै । भुनजा-

वहे । भुनजावहे । भुनजामहे । भुंक्ष्व । भुंजाथां । भुंग्ध्व । भुक्ता । भुञ्जाता । भुञ्जता । युनजानि । युनजाव । युनजाम । युग्धि, युक्तात् वा । युंक्त । युक्त । युनक्तु, युंक्तात् वा । युक्ता । युञ्जन्तु । युनजै । युनजावहै । युनजामहै । युंक्ष्व । युञ्जाथां । युंग्ध्वं । युक्तां । युञ्जातां । युञ्जतां । इति रुधादिः ॥

तनुञ् विस्तारे । अकारोकारावितौ ।

७३१ ॥ कृन्तनादिभ्य उः । २ । १ । ९२ । कृञस्तनादिभ्यश्च कर्तरि गे परत उर्विकरणो भवति । शपोऽपवादः । तस्य पित्स्वप्‌नास्ति । वकारमकारादौ "वा म्वोः ख" इति उकारस्य ख । तनोमि । तन्वः । तनुवः । तन्मः । तनुमः । तनोषि । तनुथः । तनुथ । तनोति । तनुतः । तन्वति । तन्वे । तन्वहे । तनुवहे । तन्महे । तनुमहे । तनुषे । तन्वाथे । तनुध्वे । तनुते । तन्वाते । तन्वते । मनुङ् बोधने । ङकारोकारावितौ । मन्वे । मन्वहे । मनुवहे । मन्महे । मनुमहे । इत्यादि ॥ डुकृञ् करणे डुकारञकारौ इतौ । आदेश उत्वं एपि च कृते "कुर्यि च" इति वर्तमाने—

७३२ ॥ गेऽतः कृञ्ङित्सु उत् । ४ । ४ । १०७ । गे क्ङिति परतः करोतेरकारात्तस्यात उकारादेशो भवति । तकारात्पुनरप् न भवति । "वा म्वोः ख" इति वर्तमाने—

७३३ ॥ कुर्यि च । ४ । ४ । १०६ । करोतेः परस्य उतः ख नित्यं भवति यकारादौ म्वोश्च परतः । करोमि । कुर्वः । कुर्मः । करोषि । कुरुथः । कुरुथ । करोति । कुरुतः । कुर्वन्ति । कुर्वे । कुर्वहे । कुर्महे । कुरुषे । कुर्वाथे । कुरुध्वे । कुरुते । कुर्वाते । कुर्वते । अडि-सम्-पूर्व. । समतनव । समतन्व । समतनुव । समतन्म । समतनुम । समतनोः । समतनुत । समतनुत । समतनोत् । सम-

तनुता । समतन्वन् । समतन्वि । समतन्वहि । समतनुवहि । समतन्महि । समतनुमहि । समतनुथा: । समतन्वाथा । समतनुध्व । समतनुत । समतन्वाता । समतन्वत ॥ अमन्वि । अमन्वहि । अमनुवहि । इत्यादि । समपूर्व. ।

७३४ । संपर्युपात् कृः सुट् भूषे । ४ । ३ । १२९ । सम् परि उप् इत्येतेभ्यः परस्य कृञः सुडागमा भवति भूषे भूषायामर्थे । गेर्भो कार्यस्यातरगत्वात् सुटि कृते पश्चादडागमः । समस्कुरव । समस्कुर्व । समस्कुम । समस्कुरो समस्कुरुत । समस्कुरुत । समस्करोत् । समस्कुरुता । समस्कुर्वन् । समस्कुर्वि । समस्कुर्वहि । समस्कुर्महि । समस्कुरुथा: । समकुर्वाथा । समस्कुरुध्व । समस्कुरुत । समस्कुर्वाता । समस्कुर्वत । लिङि तनुयां । तनुयाव । तनुयाम । इत्यादि । तन्वीय । तन्वीवहि । तन्वीमहि । इत्यादि । मन्वीय । मन्वीवहि । मन्वीमहि । इत्यादि । कुर्या । कुर्याव । कुर्याम । इत्यादि । कुर्वीय । कुर्वीवहि । कुर्वीमहि । इत्यादि ॥ लोटि-वितनवानि । वितनवाव । वितनवाम । वितनु, वितनुतात् वा । वितनुत । वितनुत । वितनोतु, वितनुतात् वा । वितनुता । वितन्वतु । वितनवै । वितनवावहे । वितनवामहै । इत्यादि । मनवै । मनवावहै । मनवामहै । इत्यादि । करवाणि । करवाव । करवाम । कुरु, कुरुतात् वा । कुरुत । कुरुत । करोतु, कुरुतात् वा । कुरुतां । कुर्वंतु । करवै । करवावहै । करवामहै । कुरुष्व । कुर्वाथा । कुरुध्व । कुरुता । कुर्वाता । कुर्वता । इति तनादिः ।

डुक्रीञ् द्रव्यविनिमये । डुञावितौ । ञ्डादयः ।

७३५ ॥ क्र्यादेः श्ना । २ । १ । ९५ । डुक्रीञ् इत्येवमादिभ्य. कर्तरि गे श्नेत्यय विकरणो भवति । शकार शित्कार्यार्थः ।

सेन ङित्वादेप् न भवति । "हल्यघोः." इति ईकारः । शतादेशः । "श्नाभ्योरातः." इत्यात्त्व । क्रीणामि । क्रीणीवः । क्रीणीमः । क्रीणासि । क्रीणीथः । क्रीणीथ । क्रीणाति । क्रीणीतः । क्रीणन्ति । क्रीणे । क्रीणीवहे । क्रीणीमहे । क्रीणीषे । क्रीणाथे । क्रीणीध्वे । क्रीणीते । क्रीणाते । क्रीणते ॥ वृञ् सम्भक्तौ । वृणे । वृणीवहे । वृणीमहे । वृणीषे । वृणाथे । वृणीध्वे । वृणीते । वृणाते । वृणते । ग्रहज् उपादाने । "ज्यादियणः सान्तोऽर्यास्य" इति वर्तमाने—

७३६॥ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति ।४।१।२६।। ग्रहादीनां किति ङिति च सान्तो यणः इग् भवति । इति ग्रहेः ऋकारः । गृह्णामि । गृह्णीवः । गृह्णीमः । गृह्णासि । गृह्णीथः । गृह्णीथ । गृह्णाति । गृह्णीतः । गृह्णन्ति । गृह्णे । गृह्णीवहे । गृह्णीमहे । गृह्णीषे । गृह्णाथे । गृह्णीध्वे । गृह्णीते । गृह्णाते । गृह्णते ॥ लङि अक्रीणाम् । अक्रीणीव । अक्रीणीम । अक्रीणाः । अक्रीणीतम् । अक्रीणीत । अक्रीणात् । अक्रीणीताम् । अक्रीणन् । अक्रीणि । अक्रीणीवहि । अक्रीणीमहि । अक्रीणीथाः । अक्रीणाथाम् । अक्रीणीध्वम् । अक्रीणीत । अक्रीणाताम् । अक्रीणत । अवृणि । अवृणीवहि । अवृणीमहि । अवृणीथाः । अवृणाथाम् । अवृणीध्वम् । अवृणीत । अवृणाताम् । अवृणत । अगृह्णाम् । अगृह्णीव । अगृह्णीम । अगृह्णाः । अगृह्णीतम् । अगृह्णीत । अगृह्णात् । अगृह्णीताम् । अगृह्णन् । अगृह्णि । अगृह्णीवहि । अगृह्णीमहि । अगृह्णीथाः । अगृह्णाथाम् । अगृह्णीध्वम् । अगृह्णीत । अगृह्णाताम् । अगृह्णत ॥ लिङि—क्रीणीयाम् । क्रीणीयाव । क्रीणीयाम । क्रीणीयाः । क्रीणीयातम् । क्रीणीयात । क्रीणीयात् । क्रीणीयाताम् । क्रीणीयुः । क्रीणीय । क्रीणीवहि । क्रीणीमहि । क्रीणीथाः । क्रीणीयाथाम् । क्रीणीध्वम् । क्रीणीत । क्रीणीयाताम् । क्रीणीरन् । वृणीय । वृणीवहि ।

वृणीमहि । इत्यादि । गृह्णीया । गृह्णीयाव । गृह्णीयाम । इत्यादि । गृह्णीय । गृह्णीवहि । गृह्णीमहि । इत्यादि ॥ लोटि– क्रीणानि । क्रीणाव । क्रीणाम । क्रीणीहि, क्रीणीतात् वा । क्रीणीत । क्रीणीत । क्रीणातु, क्रीणीतात् वा । क्रीणीतां । क्रीणतु । क्रीणै । क्रीणावहै । क्रीणामहै । क्रीणीष्व । क्रीणाथां । क्रीणीध्वं । क्रीणीतां । क्रीणातां । क्रीणतां । वृणै । वृणावहै । वृणामहै । वृणीष्व । वृणाथां । वृणीध्वं । वृणीतां । वृणातां । वृणतां ॥

७३७ ॥ ह्रौ हलः श्नः शानः । २ । १ । ९७ । हलंताद्धोः परस्य श्नात्यस्य ह्रौ परे शानादेशो भवति । अतो हेरुप् । गृह्णानि । गृह्णाव । गृह्णाम । गृहाण, गृह्णीतात् वा । गृह्णीतं । गृह्णीत । गृह्णातु, गृह्णीतात् वा । गृह्णीता । गृह्णंतु । गृह्णै । गृह्णावहै । गृह्णामहै । गृह्णीष्व । गृह्णाथां । गृह्णीध्वं । गृह्णीतां । गृह्णाता । गृह्णतां ॥ इति क्र्यादिः ।

चुर स्तेये । अकार उच्चारणार्थः ।

७३८ ॥ चुरादिभ्यो णिच् । २ । १ । ३६ । चुरादिभ्यो धुभ्यः स्वार्थे णिच् त्यो भवति । चकारो णिङ्णिचोः सामान्यग्रहणविघातार्थः । णकारो णीति सामान्यग्रहणार्थः ।

७३९ ॥ ध्युङः । ५ । २ । ९३ । घेरुङः एप् भवति गे चागे च परतः ।

७४० ॥ तदंता धवः । २ । १ । ४४ । सन्नाद्यताः शब्दा धुसंज्ञा भवंति । इति धुसंज्ञायां ततो लडादयः । शबेबयादेशाः । चोरयामि । चोरयावः । चोरयामः । इत्यादि । छदं संवरणे । ऐकार

1 । ०पुके० । २ । ३ । ८६ । हलादि सूत्रेऽप्यस्ति भावः ।

इत्। तेन—एकदेशकृतं लिंगं समुदायस्य विशेषणमिति णिजंतादो भवति। ऐविति ञ्णीति च वर्तमाने—

७४१ ॥ उङोऽतः। ५। २। ४। गोरुङोऽकारस्य ञ्णिति परतः ऐप् भवति। इत्याकारः। छादये। छादयावहे। छादयामहे। इत्यादि। लक्षञ् दर्शनांकयोः। पूर्ववदन्यत्। लक्षयामि। लक्षयावः। लक्षयामः। इत्यादि। लक्षये। इत्यादि। लङि-अचोरयमित्यादि। अच्छादये। अच्छादयावहि। इत्यादि। अलक्षयमित्यादि। अलक्षये। अलक्षयावहि। अलक्षयामहि। इत्यादि। लिङि-चोरयेयं। चोरयेव। चोरयेम। इत्यादि। छादयेय। छादयेवहि। छादयेमहि। इत्यादि। लक्षयेय। लक्षयेव। इत्यादि॥ लक्षयेय। लक्षयेवहि। लक्षयेमहि। इत्यादि। लोटि-चोरयाणि। चोरयाव। चोरयाम। इत्यादि। छादयै। छादयावहै। छादयामहै। इत्यादि। लक्षयाणि। लक्षयाव। लक्षयाम। इत्यादि। लक्षयै। लक्षयावहै। इत्यादि। युज पूच संयमे। "चुरादिभ्यो णिच्", इति वर्तमाने—

७४२ ॥ युजादेर्वा। २। १। ३७। युजादिभ्यो धुभ्यः स्वार्थे णिच् स्यो वा भवति। पक्षे-न्याय्यविकरणः शप्। पूर्ववच्छेषं। योजयामि। योजयावः। योजयामः। योजामि। योजावः। योजामः। इत्यादि॥ अर्चं पूजायां। ऐकार इत्। णिजभावपक्षे ऐदित्त्वावकाश इति णिचि दो न भवति। अर्चयामि। अर्चे। इत्यादि। वृञ् आवरणे। ञकार इच्चरितार्थोऽणिचूपक्षे इति णिजंतादो न भवति। वारयामि। वरामि। वरे इत्यादि। लङि-अयोजयं। अयोजमिति। आर्चयं, आर्चे इत्यादि। अवारय। अवर। अवरे। इत्यादि। लिङि-योजयेयं। योजेयम्। इत्यादि। अर्चयेय। अर्चेय। इत्यादि। वारयेयं। वरेय। इत्यादि। लोटि-योजयानि। इत्यादि। अर्चयानि।

अर्चे । वारयाणि । नराणि । वैरे । इत्यादि समुच्चेयं ।

इति कर्तृगलकारपरिच्छेद. ।

यदा तु—

७४३ ॥ लः कर्मणि च भावे च घेः । २ । ४ । ५७ ।
नव लकारास्त्यक्तविशेषणाः सकर्मकेभ्यो धुभ्य' कर्मणि चकारात्कर्तरि भवति । विसञ्ज्भ्यो भावे कर्तरि च भवति । इति कर्मभावयोर्लो भवति । तदा—

७४४ ॥ दौ । १ । २ । ७ । भावे कर्मणि च यो लकारस्तस्य दो भवति । तत्र—

७४५ ॥ गे यक् । २ । १ । ८१ । ङियाचिनि गे परतो धोयक् स्या भवति, न शवादयः । ककार किल्कार्यार्थः । पूर्ववदेत्वादि । भावकर्मणोस्तुल्य रूप । पर भावे त एव भवति । लकाराभिधेयभावस्यैकत्वादयुस्मदस्मद्विषयत्वाच्च लकारेण नाभिहित कर्तरि कर्तृवाचिनो मृदोभा ॥ भू सत्ताया क्रियायाः अकर्मकत्वाच्च भू इत्यं तस्मात् भावे लकारा भवति । भूयते देवदत्तेन विदुषा । भूयते देवदत्ताभ्या विद्वद्भ्या । भूयते देवदत्तजिनदत्तगुरुदत्तैर्विद्वद्भि । त्वया भूयते । मया भूयते । यद्यपि साधनभेदे वास्तव. क्रियाभेदः । तथापि स शब्देन नोपादीयते । इत्येकवचनमत्र भवति । "अकर्मका अपि धव' सगयः सकर्मका भवति" इति वचनादय गिपूर्व- सकर्मको भवति । इति अनुपूर्व । अनुभूय । अनुभूयावहे । अनुभूयामहे । अनुभूयसे । अनुभूयाथे । अनुभूयध्वे । अनुभूयते । अनुभूयेते । अनुभूयते । एवमभिपूर्व । अभिभूये । अभिभूयावहे । अभिभूयामहे । इत्यादि । तथा-लङादिषु-अभूयत । अन्वभूय । इत्यादि । भूयेत । अनुभूयेय । इत्यादि । भूयता । अनुभूयै । इत्यादि । एव—एध्यते । ऐध्यत ।

एध्येत । एध्यता । पच्यते । अपच्यत । पच्येत । पच्यतां । नीयते । अनीयत । नीयेत । नीयता । "हलुङ्क्ङित्यनिदितः" इति नख । प्रध्वस्यते । प्राध्वस्यत । प्रध्वस्येत । प्रध्वस्यता । एचोऽश्या इत्यधिकृत्य—

७४६ ॥ व्योऽलिटि । ४ । ३ । ४५ । व्येञो धोरलिटि अक्ङिद्विषये आत्त्वं भवति । स्वप्यादेरिति साचो यण इक् । हलो यणिकः इति दीः । वीयते । अवीयत । वीयेत । वीयता । "यि क्ङित्यवद्" इति वर्तमाने—

७४७ ॥ दीश्च्व्यकृद्ये । ५ । २ । १४८ । च्व्यकृद् यकारे अगयकारे च गोर्दीर्भवति । हूयते । अहूयत । हूयेत । हूयता हायते । अहायत । हायेत । हायता । "ईय" इति वर्तमाने—

७४८ ॥ भूमास्थागापाहाक्सां हलि । ४ । ४ । ६९ । भूसञ्ज्ञकानां मा स्था गा पा हाक् सा इत्येतेषां च घूनां हलादौ क्ङिति परतः ईत्त्वं भवति । निधीयते । न्यधीयत । निधीयेत । निधीयतां । अयते । धायत । अयेत । अयतां ।

७४९ ॥ यि क्ङित्स्यद् । ५ । २ । १४५ । शीङो यकारादौ क्ङिति परतः अयङादेशो भवति । अधिशय्यते । अध्यशय्यत । अधिशय्येत । अधिशय्यता । क्त्येऽदोऽग जग्धिरिति वर्तमाने-

७५० ॥ ब्रस्तेर्वच्भूः । १ । ४ । १११ । ब्रुवोऽस्तेश्च यथासङ्ख्यं वच् भू इत्येतावादेशौ भवतोऽगे परतः । स्वप्यादेरिति साचो यण इक् । उच्यते । औच्यत । उच्येत । उच्यतां । दीव्यते । अदीव्यत । दीव्येत । दीव्यतां । प्रभूयते । प्राभूयत । प्रभूयेत । प्रभूयता । सन्नयते । समनयत । सन्नयेत । सन्नयतां । अभिभूयते । अभ्यभूयत । अभिभूयेत । अभिभूयतां । अस्यते ।

आद्यत । अश्येत । अश्यतां । निश्चीयते । निरचीयत । निश्चीयेत । निश्चीयतां । तुद्यते । अतुद्यत । तुद्येत । तुद्यतां । म्रियते । अम्रियत । म्रियेत । म्रियतां । मुच्यते । अमुच्यत । मुच्येत । मुच्यतां । रुध्यते । अरुध्यत । रुध्येत । रुध्यतां । भुज्यते । अभुज्यत । भुज्येत । भुज्यतां । युज्यते । अयुज्यत । युज्येत । युज्यतां ।

७५१ ॥ तनेर्यकि । ४ । ३ । ४८ । तनोतेराकारो यकि परतो वा भवति । तायते । तन्यते । अतायत । अतन्यत । तायेत । तन्येत । तायतां । तन्यतां । मन्यते । अमन्यत । मन्येत । मन्यतां । क्रियते । अक्रियत । क्रियेत । क्रियतां । विक्रीयते । व्यक्रीयत । विक्रीयेत । विक्रीयतां । संव्रियते । समव्रियत । संव्रियेत । संव्रियतां । गृह्यते । अगृह्यत । गृह्येत । गृह्यतां । "अगे" खमिति चानुवर्तमाने ।

७५२ ॥ णेः । ४ । ४ । ५६ । णेः खं भवत्यगे परतः । चोर्यते । अचोर्यत । चोर्येत । चोर्यतां । छाद्यते । अछाद्यत । छाद्येत । छाद्यतां । लक्ष्यते । अलक्ष्यत । लक्ष्येत । लक्ष्यतां । योज्यते । अयोज्यत । योज्येत । योज्यतां । युज्यते । अयुज्यत । युज्येत । युज्यतां । अर्च्यते । आर्च्यत । अर्च्येत । अर्च्यतां । णिजभावेऽप्यविशेष । वार्यते । अवार्यत । वार्येत । वार्यतां । व्रियते । अव्रियत । व्रियेत । व्रियतां । इत्यादि सप्रपंचमवगम्यात्रय ॥ अपि च कस्यांचित् धोः कश्चिदर्थभागः कर्मस्थप्रधानः फलरूपी विक्लेदादिः । कश्चिद् कर्तृस्थप्रधानः भावनाक्रियाधिश्रयणादिः । तत्र यदा कर्मस्थं स्वस्यार्थभागं सुकरत्वेन वा कर्मण्यध्यारोपितायां भावनायां धुर्नर्तते, तदा तत्कर्मकर्ता भवति । तत्र टकारे—

७५३ । कर्मवत्क्लेऽस्वादीनां ।२।१।७६। कर्मकर्तरि टकारो

सति तदन्तस्य धोः स्यवत्यादिवर्जितस्य कर्मणीव कार्यं भवति । यथा कर्मणि दयक्चिटो भवति । तथा तत्रापत्यर्थं । कर्मकर्तर्यपि तान्येवोदाहरणानि भवन्ति । कर्मकर्तृभावाभिव्यक्त्यर्थं स्वयमेवेत्यनुप्रयुज्यते । अनुभूयेऽह स्वयमेव । अनुभूयावहे । अनुभूयामहे स्वयमेव । इत्यादि । एव पच्यते ओदनः स्वयमेव । निष्क्रियतेत्यर्थः । इत्यादि नेय ।

इति यक्परिच्छेदो द्वितीय. ।

कर्त्तरि शेषलकारा नीयन्त । भू इति स्थिते "लोट् चाशिषि" इति पक्षे लिङ् । ङकारेकारौ पूर्ववदितौ । मिवादयश्च । "लेः सीयुट्" "यासुण्मे" इति वर्तमाने—

७५४ ॥ क्विदाशिषि । २ । ४ । ८६ । आशिष्यर्थे लिङो यासुट् क्विद् भवति । तेनोऽग एव इग्भिर्कार्ट लिङादिर्यास्गसक्तान्त्यनत्वसत्वे न भवत. । स्कोदः स्कोऽन्ते चेति झलि सलु । भूयासं । भूयास्व । भूयास्म । भूयाः । भूयास्त । भूयास्त । भूयात् । भूयास्तां । भूयासु. । दधिधौ सीयुट् । झटो रत्नतौ ।

७५५ ॥ वर्धाः सुट् । २ । ४ । ८८ । लिङादेस्तारथवयोस्तकारथकारयोः सुडागमो भवति । व्योः ख वन्रुकाविति यलु । वलादाविडिति इट् । स्यादेशयोरिति षत्व ष्टुत्वं ।

७५६ ॥ षेणसेः । ४ । ५ । ५४ । इण. परस्मात् इटो

च्याञ्च । पच्यास्म । पच्याः । पच्यास्त । पच्यास्त । पच्यात् । पच्यास्ता । पच्यासु. । एकाच् घस इति "न वृद्भ्य." इति च वर्तमाने–

७५७ ॥ लौदिद्व्योऽपच्छिश्रिशीडीरुपदृक्तोदृवृद्तः । ५ । १ । १२३ । लृकारेत ओकारेतोऽजताच गेरेकाच. परस्य वलायगस्येट् न भवति पत् श्वि श्रि शी डी रुपदृकं ऊदत वृ ऋदंत अदंत इत्येतान् वर्जयित्वा । औकारेत्त्वात् पचेः सीयुट इट् न भवति। पक्षीय । पक्षीवहि । पक्षीमहि । पक्षीष्ठाः । पक्षीयास्थां । पक्षीध्व । पक्षीष्ट । पक्षीयास्तां । पक्षीरन् ॥ नेयास । नयास्व । नेयास्म । इत्यादि । घ्वसिषीय । घ्वसिषीवहि । घ्वसिषीमहि । इत्यादि । वियासं । वियास्व । वियास्म । इत्यादि । लौदिदच इत्यजतत्वात् व्येञ इट् न भवति । व्यासीय । व्यासीवहि । व्यासीमहि । इत्यादि । हूयास । हूयास्व । हूयास्म । इत्यादि ।

७५८ ॥ इणः षीध्वंलुङ्लिटां धो ढः । ५ । ४ । ६३ । इणः परेषां षी ध्व लुङ् लिटां धकारस्य ढकारो भवति । इति ढत्व । व्यतिहेषीय । व्यतिहेषीवहि । व्यतिहेषीमहि । व्यतिहेषीष्ठाः । व्यतिहेषीयास्थां । व्यतिहेषीढ्व । व्यतिहेषीष्ट । व्यतिहेषीयास्तां । व्यतिहेषीरन् । हासीय । हासीवहि । हासीमहि । इत्यादि ।

७५९ ॥ लिङ्येत् । ४ । ४ । ७० । भ्वादीनां क्ङिति लिङि परतः एकारो भवति । धियेयास । धियेयास्व । धियेयास्म । इत्यादि । श्रित्पूर्वः । श्रद्धासीय । श्रद्धासीवहि । श्रद्धासीमहि । इत्यादि । अयास । अयास्व । अयास्म । इत्यादि । औकारेदित्वादनिट् । व्यत्यसीय । व्यत्यसीवहि । व्यत्यसीमहि । इत्यादि । "वेणुञः" इति पक्षे ढत्व । शयिषीय । शयिषीवहि । शयिषीमहि । शयिषीष्ठाः । शयिषीयास्थां । शयिषीढ्वं, शयिषीध्व । शयिषीष्ट ।

शाधिषीयास्ताम्। शाधिषीरन्॥ उच्यास । उच्यास्व । उच्यास्म। इत्यादि । मूत्रः स्थानिवद्भावेन वचेरनिडयं. औकार इत्यनिट्। वक्षीय । वक्षीवहि । वक्षीमहि । इत्यादि । दीव्यास । दीव्यास्व । दीव्यास्म । इत्यादि । व्यतिदीविषीय । व्यतिदीविषीवहि । व्यतिदीविषीमहि । इत्यादि । वा लिङ्सिचाविति वर्तमाने—

७६० ॥ ऊदिद्वः । ५ । १ । १०० । ऊदितो धोर्धुमश्च परस्य वलादेरिड् वा भवति । पक्षे इट् । इट्पक्षे वेण्वरिति वा ढत्व । प्रसविषीय । प्रसविषीवहि । प्रसविषीमहि । प्रसविषीष्ठाः । प्रसविषीयास्थाम् । प्रसविषीध्व, प्रसविषीढ्व । प्रसविषीष्ट । प्रसविषीयास्ताम् । प्रसविषीरन् । अनिट्पक्षे—इणः षीध्वमिति नित्य ढत्व । प्रसोषीय । प्रसोषीवहि । प्रसोषीमहि । प्रसोषीष्ठाः । प्रसोषीयास्थाम् । प्रसोषीढ्वं । प्रसोषीष्ट । प्रसोषीयास्ताम् । प्रसोषीरन्॥ सनद्यास । सनद्यास्व । सनद्यास्म । इत्यादि । औकारत्वादनिट्।

७६१ ॥ नहो धः । ५ । ३ । ६९ । नहेर्धौश्चि च पदान्ते च धकारो भवति । इति धत्व । नत्सीय । नत्सीवहि । नत्सीमहि । इत्यादि । अभिपूयास । अभिपूयास्व । अभिपूयास्म । इत्यादि । सोषीय । सोषीवहि । सोषीमहि । इत्यादि । "ऊदिद्वः" इति ऊदित्वात्पक्षे इट् । अशिषीय । अशिषीवहि । अशिषीमहि । इत्यादि । अनिट्पक्षे-व्रश्चसादिना षत्व ।

७६२ ॥ षढोः कसि । ५ । ३ । ७९ । षकारढकारयोः ककारादेशो भवति सकारादौ परत । इति ककारः । अक्षीय । अक्षीवहि । अक्षीमहि । इत्यादि ॥ निधियास । निधियास्व । निधियास्म । निधिषीय । तुयास ॥ सीकः, हलांति च वर्तमाने—

७६३ ॥ सिलौ दे । १ । १ । १०० । दपरे सिस्ये ऽौ

लिङि च सकारादौ परे यो हल् तस्मिन् परे य इक् तस्य किद्वद् कार्यं भवति। इति कित्वात् "ध्युङः" इत्येत् न भवति। तुत्सीय।

७६४ ॥ उः। १। १। १०१। ऋवर्णांतस्य धोः सकारादौ सिलौ दे परे किद्वद् कार्यं भवति। कित्वात् गागयोरित्यप् न भवति। मृषीय। मुच्यासं। मुक्षीय। रुध्यास। रुत्सीय। भुक्षीय। भुज्यास। युक्षीय। तन्यास। तनिषीय। मनिषीय। क्रियासं। क्रषीय। क्रियास। क्रिषीय। वृतो वेति वर्तमाने—

७६५ ॥ लिङ्स्योर्दे। ५। १। ९८। वृञः परयोः लिङ् सि इत्येतयोः दविषययोरिड्वा भवति। वरिषीष्ट, वृषीष्ट वा। गृह्णात्।

७६६ ॥ गृहोऽलिट्येकाचो दीः। ५। १। ९९। गृहेरेकाचः परस्य इटो दीर्घो भवति न चेत् स इट् लिटि विहितः। बलादेरिटो दीः। गृहिषीष्ट। गृहीषीष्ट। णीरिति णिख। चार्यास। छादयिषीष्ट। लक्ष्यास। लक्षयिषीष्ट। योज्यास। युज्यास। अर्च्यासं। अर्चिषीष्ट। वार्यास। व्रियास। वरिषीष्ट। वृषीष्ट। इत्यादि सविस्तरमधिगंतव्य॥ लिडुदाह्रियते। भू इति स्थिते-"भूते" अनद्यतने,, इति चानुवर्तमाने—

७६७ ॥ परोक्षे लिट्। २। २। १०८। अक्षेभ्यः परावृत्त परोक्ष स्वयं साक्षादनाधिगतं तत्र परोक्षे भूतेऽनद्यतनेऽर्थे वर्तमानाद्धोः लिडित्ययं त्यो भवति। टकारो टिदंटेरेरिति विशेषणार्थः। इकारो लिटः क्वसुकानाविति विशेषणार्थः। पूर्ववन्मिबादयः। तेषा—

७६८ ॥ मानां णल्वमथाथुसणल्वतुसुसः। २। ४। ६९। टितो लेरादेशानां मानां नवानां यथासंख्य णल् व म थ अथुस अतुस्

णश् अतुस् उस् इत्येते नवादेशाः भवति। इति णशादयः। णशाविनौ। णित् सर्वादेशार्थः। परत्वादेपि प्राप्ते-नित्यत्वाद्-"अचि" भ्व-" इति चानुवर्तमाने—

७६९ ॥ लुङ्लिटोर्वुक्। ४। ४। ८५। लुङ्लिटोराचि परतो भवतेर्वुगागमो भवति। ककारोकारावितौ। शेषोऽग एव, इति वर्तमाने—

७७० ॥ लिट्। २। ४। ९६। लिट् चागसंज्ञो भवति। इत्यगस्य वलादेरिट् प्राप्तः।

७७१ ॥ लिटीध्यस्फाद् किद्वत्। १। २। ९३। इधेरन्यस्माद्य धोरस्फादपिति लिटि परतः कितीव कार्यं भवति। इति कित्वात्—"एकाचः" न वृद्धयः" इत्यधिकृत्य—

७७२ ॥ कित्यूर्णुवृश्रयुकः। ५। १। १२५। ऊर्णुञः श्रयतेरुगंताच्चैकाचो विहिते किति नेट् भवति। इति निषिद्धः।

७७३ ॥ भृसृवृस्तुद्रुस्रुश्रोर्लिटि। ५। १। १२७। भृ सृ वृ स्तु द्रु स्रु श्रु इत्येतेभ्य एव लिटि नेट् भवति नान्येभ्यः। इति नियमान्निषिद्धो निवर्तते। पुनर्भवस्येवेद्। आदेरेकाचो द्वे, इत्यधिकृत्य-लिड्चकचि धोः, इति द्वित्व।

७७४ । पूर्वो चः। ४। ३। ९१। द्विरुक्तयोः पूर्वोऽवयवः चसंज्ञो भवति। इति चसंज्ञायां। चस्येविति वर्तमाने—

७७५ ॥ हलोऽनादेः। ५। २। १८०। चस्य संबंधिनो हलोऽनादेरुप् भवति। इति वकारस्योप्।

७७६ ॥ मः। ५। २। १८२। चस्य संबधिनोऽचः प्रादेशो भवति। इत्यूकारस्य उकारः।

७७७ ॥ भुवोऽत् । ५ । २ । १९३ । भवतेरस्य लिट्य-कारादेशो भवति । इत्युकारस्यात्व । झलो जशीति भकारस्य बकार । बभूव । बभूविव । बभूविम । बभूविथ । बभूवथु । बभूव । बभूव । बभूवतु. । बभूवु । दस्य-टिदेटरिरेरिर । थासः सेभाव. । षणूनेरिति ध्वमो वा ढत्व ।

७७८ ॥ लस्तझस्येशिरे । २ । ४ । ६९ । लेर्लिटस्त-झयोर्यथासख्य एश् इरे इत्येतावादेशौ भवतः । पूर्ववल्लिट् वुक् च कार्यं । व्यतिबभूवे । व्यतिबभूविवहे । व्यतिबभूविमहे । व्यतिबभूविषे । व्यतिबभूवाथे । व्यतिबभूविढ्वे । व्यतिबभूविध्वे । व्यतिबभूवे । व्यतिबभूवाते । व्यतिबभूविरे । लिड्यत्कृञोऽमीति वर्तमाने–

७७९ ॥ सर्विजादिदयायासोऽनृच्छूर्णोः । १ । १ ।४८। सह कृञा वर्तमानात् इजादर्धोर्दय् अय् आस् इत्येतेभ्यश्चाम् भवति लिड्वत् कृञि परत ऋच्छत्यूर्णोतिं वर्जयित्वा । कृञाऽमीति प्रत्याहारेण कृभ्वस्तीना त्रयाणा ग्रहण । तस्मिन्नामत पदमिदमनतर प्रयुज्यत ।

७८० ॥ आम्वत्तत्कृः । १ । २ । ७१ । आमतस्यैव तत्कृञो दो भवति । इति लिटो दः । तस्य पूर्ववदेत्वादि । किश्वा लिड्येप् न भवति । यणादशस्यानिवद्भावान्न द्वित्व ।

७८१ ॥ उरः । ५ । २ । १८३ । चस्य ऋकारस्य अकारादेशो भवति । शिरादामतस्य मुप उप् । त्यखे त्याश्रयमिति पदस्त्व । मुमोऽमिस्यनुस्वारः । या मुक् पदांतस्यांति विकल्पेन परसत्व । एधाचक्रे । एधाचकृवहे । एधाचकृमहे । एधाचकृषे । एधाचक्राथे । एधाचकृढ्वे । एधाचक्रे । एधाचक्राते । एधाचक्रिरे । एधाम्बभूव । एधाम्बभूविव । एधाम्बभूविम । एधाम्बभूविथ । एधाम्बभूवथु. । एधाम्बभूव ।

एधाम्बभूव । एधाम्बभूवतुः । एधाम्बभूवुः । अस् असितिद्वित्वं । हलोऽनादरिति स्म लुप् । चस्येति दीरिति च वर्तमाने—

७८० ॥ आयतः । ५ । २ । १९३ । लिटि परतः आदेरतश्चस्य दीर्भवति । इति दीत्वं । पुनः स्वेको दीः । एधामास । एधामासिथ । एधामासिम । एधामासिथ । एधामासथुः । एधामास । एधामास । एधामासतुः । एधामासुः । "उजोऽतः" इलेप् । "म्वसो संचर्वे" इति वर्तमाने—

७८३ ॥ हलमध्ये लिड्यतः । ४ । ४ । ११७ । हलोर्मध्ये वर्तमानस्यात एत्वं भवति चस्य च ख लिटि परतः । इलेचर्वे । थे भ्रादिनियमान् नित्यमिटि प्राप्ते —

७८४ ॥ वाऽत्वदचसृजृदृशो नित्यानिट्तासस्थेऽस्क्रदृच्यार्थेः । ५ । १ । ११७ । नित्यानिट् तास् येषां तेभ्योऽकारवद्भ्योऽजन्तेभ्यः सृज्दृश् इत्येताभ्यां च विहिते थे वा इट् भवति स्क्र अद् व्या अर्थि इत्येतान् वर्जयित्वा । इति यदा इट् तदा सर्वत्रैत्वचर्वे भवतः । अन्यत्र चोः कुर्त्वं । पूर्ववदन्यत् । पपाच । पपाच । पेचिव । पेचिम । पपक्थ । पेचिथ । पेचथुः । पेच । पपाच । पेचतुः । पेचुः । पेचे । पेचिवहे । पेचिमहे । इत्यादि । पेचिषे । पेचाथे । पेचिध्वे । पेचे । पेचाते । पेचिरे ॥ ननंद । ननंदिव । ननंदिम । इत्यादि । दध्वंसे । दध्वंसिवहे । दध्वंसिमहे । इत्यादि । "ट्वे" चस्यति च वर्तमाने—

किद्वद्भावात् स्वव्वच्छ्यादेरिति साचो यण इक । " एर्गत्वात्क्वादु-ब्जोऽसुधय, इति यणादेशः।पूर्ववच्छेष। विव्याय। विव्यय।विव्यिव। विव्यिम। विव्ययिथ। विव्यथुः। विव्य। विव्याय। विव्यतु.। विव्युः॥ पूर्ववत् णशादिषु कृतषु पित्स्वेत्वादि। कित्सुवादेशः। थे वेट्। स्थानिवद्भावेन द्वित्वादि। जुहुव। जुहाव। जुहुविव। जुहुविम। जुहुविथ। जुहोथ। जुहुवथुः। जुहुव। जुहाव। जुहुवतुः। जुहुवुः। व्यतिजुहुवे। व्यतिजुहुविवहे। व्यतिजुहुविमहे। व्यतिजुहुविषे। व्यतिजुहुवाथे। व्यतिजुहुविध्वे। व्यतिजुहुविद्वे। व्यतिजुहुवे। व्यतिजुहुवाते। व्यतिजुहुविरे। पक्षे लिङ्कृञ्चामीति वर्तमाने—

७८६ ॥ भीहीभृहोरुज्वत्। २। १। ५०। भी ही भृ हु इत्येतेभ्यो लिड्त् कृञ्या भवति वा स च उज्वत्। उचि कार्यं द्वित्व-मित्व चातिदिश्यते। द्वित्वे जश्त्वे च सत्येववादशौ। फलेशे दःप्राप्त'।

७८७ ॥ न। १। २। ७२। आम्वत् तत्कृञः फलेशे दो न भवति। इति प्रतिषिद्धः। वलादाविट् प्राप्त.।

७८८ ॥ कृञोऽस्कुः। ५। १। १२८। सुदर्वर्जितात्कृञो विहिते लिटि नेट् भवति। इति निषिद्ध.। थेऽप्ययमेव परत्वान्निषेधो, न विकल्पः। शेष पूर्ववत्। जुहवाचकार। जुहुवाचकर।

७९१ ॥ आतो णल औ । ५ । २ । ३६ । गोराका-रान्तस्य ढिटो णलः औकारादेशो भवति । इत्यौत्वं । दधौ । दधिव । दधिम । दधिथ । दधाथ । दधथुः । दध । दधौ । दधतुः । दधुः । दधे । दधिवहे । दधिमहे । इत्यादि । अदः,, घस्ल,, इति चानुवर्तमाने

७९२ ॥ लिटि वा । १ । ४ । १३० । अदो घस्लभावो वा भवति लिटि परतः । लकार इत् । द्वित्वादि कार्यं ।

७९३ ॥ गम्हन्जन्खन्घसोऽनङि । ४ । ४ । २४ । गमादीनां ढुडः क्ङ्दरजादावनङि ख भवति । "शासघसा" इति पत्र । पूर्ववत्वं । जघस । जघास । जक्षिव । जक्षिम । जघसिथ । जक्षथुः । जक्ष । जघास । जक्षतुः । जक्षुः । व्यतिजक्षे । व्यतिजक्षिवहे । व्यतिजक्षिमहे । व्यतिजक्षिरे इत्यादि । घस्लादेशाभावे-आद । आदिव । आदिम । आदिथ । आदथुः । आद । आद । आदतु । आदुः । व्यत्यादे । व्यत्यादिवहे । व्यत्यादिमहे । इत्यादि । अतिशिश्ये । अतिशिशियिवहे । अतिशिशियिमहे । अतिशिशियिषे । अतिशिशियाथे । अतिशिशियिध्वे । अतिशिशियिरे । अतिशिशिये । अतिशिशियाते । अतिशिशियिरे ॥ पूर्ववद् मन्त्रे घसः साधो घसः इक् ।

किद्वद्भावात् सम्प्रच्छयादीरिति साचो यण इक । " एर्गिन्नाक्चादुञ्जोऽसुधय., इति यणादेशः।पूर्ववच्छेप। विव्याय। विव्यय। विव्यिव। विव्यिम। विव्ययिथ। विव्यथुः। विव्य। विव्याय। विव्यतुः। विव्युः॥ पूर्ववत् णशादिषु कृतपु पित्त्वेवादि। कित्सुवादेशः। थे वेट्। स्थानिवद्भावेन द्वित्वादि। जुहुव। जुहाव। जुहुविव। जुहुविम। जुहुविथ। जुहोथ। जुहुवथुः। जुहुव। जुहाव। जुहुवतुः। जुहुवुः। व्यतिजुहुवे। व्यतिजुहुविवहे। व्यतिजुहुविमहे। व्यतिजुहुविषे। व्यतिजुहुवाथे। व्यतिजुहुविध्वे। व्यतिजुहुविद्वे। व्यतिजुहुवे। व्यतिजुहुवाते। व्यतिजुहुविरे। पक्षे लिङ्कृञ्नामीति वर्तमाने—

**७८६ ॥ भीह्रीभृहोरुज्वत् । २ । १ । ५० ।** भी ह्री भृ हु इत्येतेभ्यो लिङ्वत् कृञ्भ्या भवति वा स च उज्वत्। उचि कार्यं द्वित्वमित्वं चातिदिश्यते। द्वित्वे जश्त्वे च सत्येववादशौ। फलेशे दःप्राप्तः।

**७८७ ॥ न । १ । २ । ७२ ।** आम्वत् तत्कृञः फलेशे दो न भवति। इति प्रतिषिद्धः। वलादावित् प्राप्तः।

**७८८ ॥ कृञोऽसुः । ५ । १ । १२८ ।** सुद्वर्जितात्कृञो विहिते लिटि नेट् भवति। इति निषिद्धः। थेऽप्ययमेव परत्वान्निषेधो, न विकल्पः। शेषं पूर्ववत्। जुहुवाचकार। जुहुवाचकर।

**७८९ ॥ वाऽस्माण्णप् ।५।१७२।** अस्मदो णप् वा णिद् भवति। इति पक्षे णिद्वद्भावः। जुहुवाचकृव। जुहुवाचकृम। जुहुवाचकर्थ। इत्यादि। व्यतिजुहुवाचक्रे। व्यतिजुहुवाचकृवहे। व्यतिजुहुवाचकृमहे। इत्यादि।

**७९० ॥ इटि चातख ।४।४।६७।** इटि अजादौ चाग क्ङिति परे आकारान्तस्य खं भवति। इत्याख। जहे। जहिवहे। जहिमहे।

७९१ ॥ आतो णल औ । ५ । २ । ३६ । गोरांकारांतात्परस्य लिटो णलः औकारादेशो भवति। इत्यौत्वं । दधौ । दधिव । दधिम । दधिथ । दधाथ । दधथुः । दध । दधौ । दधतुः । दधुः । दधे । दधिवहे । दधिमहे । इत्यादि । अदः,, घस्ल,, इति चानुवर्तमाने

७९२ ॥ लिटि वा । १ । ४ । १३० । अदो घस्लृभावो वा भवति लिटि परतः । लकार इत् । द्वित्वादि कार्यं ।

७९३ ॥ गमहनजनखनघसोऽनङि । ४ । ४ । २४ । गमादीना हलुङः फ्ङिदयजादावनाङि ख भवति । "शासघसा" इति षत्व । पूर्ववच्छत्वं । जघास । जघास । जक्षिव । जक्षिम । जघसिथ । जक्षथुः । जक्ष । जघास । जक्षतुः । जक्षुः । व्यतिजक्षे । व्यतिजक्षिवहे । व्यतिजक्षिमहे । व्यतिजक्षिरे इत्यादि । घस्लादेशाभावे-आद । आदिव । आदिम । आदिथ । आदथुः । आद । आद । आदतुः । आदुः । व्यत्यादे । व्यत्यादिवहे । व्यत्यादिमहे । इत्यादि । अतिशिश्ये । अतिशिश्यिवहे । अतिशिश्यिमहे । अतिशिश्यिषे । अतिशिश्याथे । अतिशिश्यिढ्वे । अतिशिश्यिषे । अतिशिश्ये । अतिशिश्याते । अतिशिश्यिरे ॥ पूर्ववद् ग्रहो वचः साचो यणः इक । अचिति सम्प्रसृगादीरिति इक् । उवचे । उवाच । ऊचिव । ऊचिम । उवचिथ । उवक्थ । ऊचथुः । ऊच । उवाच । ऊचतुः । ऊचुः । ऊचे । ऊचिवहे । ऊचिमहे । इत्यादि । द्वित्वादिकं । "पुङः" एप्

नेहिमहे । इत्यादि । सुपव । सुपाव । सुपुविव । सुपुविम । सुपुविथ । सुपोथेत्यादि । सुपुवे । सुपुविवहे । सुपुविमहे । इत्यादि । "आयतः" इति दीत्व । "नुक्" इत्यधिकृत्य–

७९४ ॥ अश्नोः । ५ । २ । १९५ । अश्नोतेर्लिटि चस्य कृतद्वित्वस्य नुगागमो भवति । व्यानशे । व्यानशिवहे । व्यानशिमहे । व्यानशिषे । इत्यादि ।

७९५ ॥ वा चेः । ५ । २ । ७१ । चिनोतेर्धात्वरस्य वा कुत्वं भवति सन्लिटोः परतः । चिकय, चिकाय । चिक्यिव । चिक्यिम । चिकयिथ, चिकेथ । चिक्यथुः । चिक्य । चिकाय । चिक्यतुः । चिक्युः । चिचय । चिचाय । चिच्यिव । चिच्यिम चिचयिथ, चिचेथ । चिच्यथुः । चिच्य । चिचाय । चिच्यतुः । चिच्युः । चिक्ये । चिक्यिवहे । चिक्यिमहे । इत्यादि । चिच्ये । चिच्यिवहे । चिच्यिमहे । इत्यादि । तुतुदे । तुतुदिवहे । तुतुदिमहे । तुतुदिषे । "न वृद्भ्यः" थे इति च वर्तमान–

७९६ ॥ ऋतः । ५ । १ । ११८ । ऋकारान्ताद्धोर्विहिते थे नेट् भवति । ममर । ममार । मम्रिव । मम्रिम । ममर्थ । इत्यादि । मुमोच । मुमुचिव । मुमुचिम । मुमोचिथ इत्यादि । मुमुचे । मुमुचिवहे । मुमुचिमहे । इत्यादि । रुरोध । रुरुधिव । रुरुधिम । रुरोधिथ । रुरुधे । रुरुधिवहे । रुरुधिमहे । इत्यादि । बुभुजे । बुभुजिवहे । बुभुजिमहे । बुभुजिषे । इत्यादि । युयोज । युयुजिव । युयुजिम । युयोजिथ । इत्यादि । युयुजे । युयुजिवहे । युयुजिमहे । इत्यादि । ततन । ततान । तेनिव । तेनिम । तेनिथेत्यादि । तेने । तेनिवहे । तेनिमहे । मेने । मेनिवहे । मेनिमहे । इत्यादि । "कृञोऽस्कुः" इत्यनिट् । चकर । चकार । चकृव । चकृम । चकर्थ ।

इत्यादि। चक्रे। चक्रवहे। चक्रमहे। इत्यादि। तस्यैव सपूर्वस्य "संपर्युपात् कृ. सुट् भूषे,, इति सुट्।

१९७॥ स्फायूदर्वेरेप्। ९। २। १३५। स्फादेः ऋकारान्तस्य गोरर्चेश्च लिटि परत एप् भवति। सचस्कार। सचस्करिव। सचस्करिम। सचस्करिथ। इत्यादि। सचस्करे। सचस्करिवहे। सचस्करिमहे सचस्करिषे। सचस्करावे संचस्करिध्वे। सचस्करिढ्वे। संचस्करे सचस्कराते। सचस्करिरे॥ चिक्रय। चिक्राय। चिक्रयिव। चिक्रयिम। चिक्रयिथ। चिक्रेथ। चिक्रियथुः। चिक्रिम। चिक्राय। चिक्रियतुः। चिक्रियुः। चिक्रिये। चिक्रियिवहे। चिक्रियिमहे। चिक्रियिषे॥ इत्यादि। वव्रे। वव्रवहे। वव्रमहे। वव्रषे। वव्राथे। वव्रढ्वे। वव्रे। वव्राते। वव्रिरे। वशिग्र्यविव्यचिग्याग्रहीत्यादिना यण इक्। अनुजग्राह। अनुजगृहिव। अनुजगृहिम। अनुजगृहिथ। इत्यादि। अनुजगृहे। अनुजगृहिवहे। अनुजगृहिमहे। इत्यादि। चोरयाचकार, चोरयाचकर। चोरयाचकृव। चोरयाचकृम। इत्यादि। छादयाचक्रे। छादयाचकृवहे। छादयाचकृमहे। इत्यादि। लक्षयाचकार। लक्षयाचकर। लक्षयाचकृव। लक्षयाचकृम। इत्यादि। लक्षयाचक्रे। लक्षयाचकृवहे। लक्षयाचकृमहे। इत्यादि। योजयाचकार। योजयाचकर। युयोज। अर्चयाचकर। अर्चयाचकार। आनर्च। वारयाचकार। ववार। वव्रे। इत्यादि सप्रपच सर्वमवगतव्य॥ लुङ् प्रदर्श्यते। "भूते,, इत्यनुवर्तमाने—

१९८॥ लुङ्। २। २। ११७। भूतेऽर्थे वर्तमानाद्धोर्लुङ् स्यो भवति। ङकारो ङितः सखमिति विशेषणार्थः। उकारो लुङ्ङिति विशेषणार्थः। स्यासी लृल्वेरिति व्यासात्सिः प्राप्तस्तदपवादः।

१९९॥ सिर्लुङि। ३। १। ५२। धोर्लुङि परतो मध्ये

सिस्यो भवति । इकारः "सावैम्मे" इति विशेषणार्थः । "पञ उप्" इत्यधिकृत्य—

८०० ॥ ग्रुभूस्थेणिक्पिबः सेर्म्मे । १ । ४ । १४९ । ग्रुसञ्ज्ञकेभ्यो भू स्था इण् इक् पिब इत्येतेभ्यश्च परस्य सेरुब्भवति मे परतः । इति सेरुप् । त्वखे त्वाश्रयन्यायेन सावैप् प्राप्तः, "नोमता गोः" इति निषिद्धः । "लुङ्लङ्लृङ्क्ष्वमाङ्क्षद्" इत्यट् । पूर्ववन्मिवादिः । "एमें" इत्यादि च ङिल्लकारकार्यं । पित्स्वेप् प्राप्तः । "नेटः" इति वर्तमाने—

८०१ ॥ सूभ्वोऽथस्य मिङि । ५ । २ । ९६ । सू भू इत्येतयोरथसंज्ञकयोर्मिङि पित्स्वेप् न भवति । "लुङ्लिटोर्वुक्" इत्यजादौ वुक् । अभूवं । अभूव । अभूम । अभूः । अभूतं । अभूत । अभूत् । अभूतां । अभूवन् । दविधौ—सेरुप् न भवति । तत्र सेरिद् । एवादेशौ । "ह्रस्य देऽनतः" इत्यदादेशः । व्यत्यभविषि । व्यत्यभविष्वहि । व्यत्यभविष्महि । व्यत्यभविष्ठाः । व्यत्यभविषाथां । व्यत्यभविध्वं । व्यत्यभविढ्व । व्यत्यभविष्ट । व्यत्यभविषातां । व्यत्यभविषत । "स्कांतस्य ख" इति "रासः" इति च वर्तमाने—

८०२ ॥ धि वा । ५ । ३ । ६१ । धकारादौ परतो वा सकारस्य ख भवति । पक्षे जदत्वे डकारः । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्ठाः । ऐधिषाथां । ऐधिध्वं । ऐधिड्ढ्वं । ऐधिष्ट । ऐधिषातां । ऐधिषत ॥ "सार्वैम्मे" इति वर्तमाने—

८७५ ॥ झलो झलि । ५ । ३ । ६२ । झलः परस्य सकारस्य खं भवति झलि परतः । इति सखं । "थविस्तेः" इति ढेर्डुस् । अपाक्ष । अपाक्त । अपाक्ष्म । अपाक्षीः । अपाक्तं । अपाक्त । अपाक्षीत् । अपाक्तौ । अपाक्षुः । अपाक्षि । अपक्ष्वहि । अपक्ष्महि । अपक्थाः । अपक्षाथां । अपग्ध्वं । अपक्त । अपक्षातां । अपक्षत ।

८७६ ॥ नेटि । ५ । १ । ८८ । हलंतस्य गोरचः ऐप् न भवति मे परे सादिडादौ परतः । "रः खं" इति वर्तमाने—

८७७ ॥ ईटीटः । ५ । ४ । १९ । इटः परस्य सेरीडादौ त्ये परतः खं भवति । खेकॆो दीः । अनदिप । अनंदिष्व । अनदिष्म । अनंदीः । इत्यादि । अप्वासिपि । अप्वासिष्वहि । अप्वासिष्महि । इत्यादि । "सौ, मे" इति च वर्तमाने—

८७८ ॥ यमूरमूनमातां सक् च । ५ । १ । १४६ । यम् रम् नम् इत्येतेभ्यः आकारांतेभ्यश्च मपरे सौ परतः इट् भवति सक् चागमं एषां । अन्यासिपं । अन्यासिष्व । अन्यासिष्म । अन्यासीः । इत्यादि । अन्यासि । अन्यासिष्वहि । अन्यासिष्महि । इत्यादि । "सावेम्मे" इत्यादि पूर्ववत् । अहीपं । अहौष्व । अहौष्म । अहौषीरित्यादि । व्यत्यहोपि । व्यत्यहोष्वहि । व्यत्यहोष्महि । व्यत्यहोष्ठाः । व्यत्यहोपाथां । व्यत्यहोढ्वं । धि वेति यदा सेर्न खं, तदा त्यादशयोरिति षत्व । जश्त्वे डकारः । ष्टुत्वे च परस्य ढकारः । व्यत्यहोड्ढ्वं । व्यत्यहाष्ट । व्यत्यहोपातां । व्यत्यहोपत । अहासि । अहासहि । अहास्महि । इत्यादि । मुमूर्स्यादिना सेडप् ।

८७९ ॥ आतः । २ । ४ । ९१ । आकारांतात् यः सिः तस्मात् परस्य झेर्जुम् भवति । अधां । अधाव । अधाम । अधुः । इत्यादि । "यमसौ सिरो दे" इति वर्तमाने—

८१० ॥ घुस्थोरिः । १ । १ । १९६ । घुसंज्ञकस्य स्था इत्येतस्य च धोः सकारादौ दपरे सादिकारादेशो भवति किद्वच । झलि—

८११ ॥ माद्गोः । ५ । ३ । ६३ । प्रातात् गोरुत्तरस्य सकारस्य खं भवति झलि । इति ख । अधिपि । अधिष्वहि । अधिष्महि । अधिथाः । अधिषाथा । अधिध्व । अधित । अधिषातां । अधिषत ।

८१२ ॥ घस्लज्लुङ्घञ्सनि । १ । ४ । १२९ । अदेर्घस्लृ इत्ययमादेशो भवति अचि लुङि घञि सनि च परतः । लृकारो ल्रित्कार्यार्थः । "वक्त्यसुख्यातेरङ्" इत्यधिकृत्य—

८१३ ॥ द्युत्पुष्यादिल्रित्सर्तिशास्तेर्मे । २ । १ । ६१ । द्युतादिभ्यः पुषादिभ्यश्च ल्रकारेद्भ्यः सार्तिशास्तिभ्यां च कर्तरि मपरे लुङि परतो अङ् भवति । ङकारो ङित्कार्यार्थः । अघस । अघसाव । अघसाम । इत्यादि । दविधौ सिरेव । "मरुद्रेऽस्तोऽच." इति वर्तमाने–

८१४ ॥ स्यगे सः । ५ । २ । १३४ । सकारादावगे परतो गोरचः परस्य सकारस्य तकारादेशो भवति । इति तकार । झलि सः खं । व्यत्यघसि । व्यत्यघत्स्वहि । व्यत्यघत्स्महि । व्यत्यघत्थाः । इत्यादि । अशयिपि । अशयिष्वहि । अशयिष्महि । इत्यादि ।

८१५ ॥ वक्त्यसुख्यातेरङ् । २ । १ । ५८ । वक्ति-वचै परिभाषणे ब्रूञादेशश्च, असु क्षेपणे, ख्या प्रकथने चक्षादेशश्च । एतेभ्यो धुभ्यः कर्तरि लुङि परतोऽङ् भवति । इत्यङ् । "नशोऽङीम्" इति वर्तमाने—

८१६ ॥ श्व्यस्पद्वचोऽथुक्पुमुम् । ५ । २ । १४२ । श्वि अस् पत् वच् इत्येतषा यथासंख्यमकार थुक् पुम् उम् इत्येते

आगमा भवति अङि परत. । इति वचेरुमागम' । अवोच ! अवाचाव । अवोचाम । इत्यादि । अवोच । अवाचावहि । अवोचामहि । इत्यादि । सरिद् ।। सिसिपोरीट् । "इटीट" इति सख । सखसाश्रयमिति "हलामच" इति एपि प्राप्त नेटाति निषिद्ध । "ध्युड" इत्येप् । अदविप । अदविष्व । अदविष्म । अदेवीरित्यादि । व्यत्यदेविषि । व्यत्यदेविष्वहि । व्यत्यदेविष्महि । इत्यादि । असविषि । असविष्वहि । असविष्महि असोाप । असाष्वहि । असाष्महि । इत्यादि । अनात्स । अनात्स्व । अनात्स्म । अनात्सीरित्यादि । अनात्सि । अनत्स्वहि । अनत्स्महि । इत्यादि । "सानजे." इत्यधिकृत्य--

८१७ ॥ स्तुधूञ्सोर्मे । ६ । १ । १४६ । स्तु धूञ् सुञ् इत्येतेभ्यो मे परे सावित् भवति । असाविष । असाविष्व । असाविष्म । असावीरित्यादि । असोपि । असोष्वहि । असोष्महि । इत्यादि । आशिषि । आशिष्वहि । आशिष्महि । आशिट्ठा' । इत्यादि । अनिट्पक्ष त्रश्चेत्यादिना पत्व । षढो. कस्सीति कत्व । टुत्वादि च । आक्षि । आक्ष्वहि । आक्ष्महि । आष्टा । आक्षाथा । आड्ढ । आष्ट । आक्षाता । आक्षत । निरचेप । निरचेष्व । निरचैष्म । निरचैषीरित्यादि । समचपि । समचेष्वहि । समचेष्महि । इत्यादि । "हलामच" इत्यप् । सिप्तिपोरीट् । झलि से ख । अतौत्स । अतौत्स्व । अतौत्स्म । अतौत्सी । अतौत्त । अतौत्त । अतौत्सीत् । अतौर्त्ता । अतौमु । "सिजौ दे" इति से किद्वद्भावात् "ध्युड" इत्येप् न भवति । झलि सेः ख । वि वेत्यखपक्षे झला जम् झर्श ति सेर्जस्त्व । तस्य "झरो झरि स्वे" इति ख । अतुत्सि । अतुत्स्वहि । अतुत्स्महि । अतुत्था । अतुत्साथा । अतुद्ध्व । अतुत्त । अतुत्साता । अतुत्सत । अमृषि । अमृष्वहि । अमृष्महि । अमृथा । इत्यादि । ग्रुत्पुष्यादीत्यादिना अङ् । अमुच ।

८१० ॥ घुस्थोरिः । १ । १ । १९६ । घुसंज्ञकस्य स्था इत्येतस्य च धो' सकारादौ दपरे साविकारादेशो भवति किद्वच । झलि—

८११ ॥ माद्रोः । ५ । ३ । ६३ । प्रांतात् गोरुत्तरस्य सकारस्य खं भवति झलि । इति ख । अधिषि । अधिष्वहि । अधिष्महि । अधिथाः । अधिषाथा । अधिध्व । अधित । अधिषातां । अधिषत ।

८१२ ॥ घस्लजुलुङ्घञ्सनि । १ । ४ । १२९ । अदेर्घस्लृ इत्ययमादेशो भवति अचि लुङि घञि सनि च परतः । लृकारो लित्कार्यार्थ. । "वक्त्यसुख्यातेरङ्" इत्यधिकृत्य—

८१३ ॥ द्युत्पुष्यादिलित्सर्तिशास्तेमें । २ । १ । ६१ । द्युतादिभ्यः पुषादिभ्यश्च लृकारेद्भ्य. सार्तिशास्तिभ्यां च कर्तरि मपरे लुङि परतो अङ् भवति । ङकारो ङित्कार्यार्थः । अघस । अघसाव । अघसाम । इत्यादि । दविधौ-सिरेव । "मरुद्रेऽस्तोऽच." इति वर्तमाने–

८१४ ॥ स्यगे सः । ५ । २ । १६४ । सकारादावगे परतो गोरचः परस्य सकारस्य तकारादेशो भवति । इति तकारः । झलि-सेः खं । व्यत्सघीत्स । व्यग्घत्स्वहि । व्यत्सघत्समहि । व्यत्सघत्थाः । इत्यादि । अशयिषि । अशयिष्वहि । अशयिष्महि । इत्यादि ।

८१५ ॥ वक्त्यसुख्यातेरङ् । २ । १ । ५८ । वक्ति-वचै परिभाषणे ब्रूञादेशश्च, असु क्षेपणे, ख्या प्रकथने चक्षादेशश्च । एतेभ्यो घुभ्यः कर्तरि लुङि परतोऽङ् भवति । इत्यङ् । "नशोऽङीम्" इति वर्तमाने—

८१६ ॥ श्व्यस्पद्वचोऽथुक्पुमुम् । ५ । २ । १४२ । श्वि अस् पत् वच् इत्येतेषां यथासंख्यमकारे थुक् पुम् उम् इत्येते

आगमा भवंति अङि परतः । इति वचेरुमागम । अवोच । अवाचाव । अवोचाम । इत्यादि । अवोचे । अवोचावहि । अवोचामहि । इत्यादि । सरिट । सिसिषिरीट् । "इटीट" इति सख । त्यखे त्याश्रयमिति "हत्यामच" इति एपि प्राप्ते नेटीति निषिद्ध । "ध्युड." इत्येप् । अदविष । अदेविष्व । अदेविष्म । अदेवीरित्यादि । व्यत्यदेविषि । व्यत्यदेविष्वहि । व्यत्यदेविष्महि । इत्यादि । असविषि । असविष्वहि । असविष्महि असोाष । असाष्वहि । असाष्महि । इत्यादि । अनात्स । अनात्स्व । अनात्स्म । अनात्सीरित्यादि । अनात्सि । अनत्स्वहि । अनत्स्महि । इत्यादि । "सावजे." इत्यधिकृत्य—।

८१७ ॥ स्तुघूञ्सोर्मे । ५ । १ । १४६ । स्तु घूञ् सुञ् इत्येतेभ्यो मे परे साविट् भवति । असाविष । असाविष्व । असाविष्म । असावीरित्यादि । असोषि । असोष्वहि । असोष्महि । इत्यादि । आशिष । आशिष्वहि । आशिष्महि । आशिष्ठा । इत्यादि । अनिट्पक्ष व्रश्चेत्यादिना षत्व । षढोः कस्सीति कत्व । टुत्वादि च । आक्षि । आक्ष्वहि । आक्ष्महि । आष्टा । आक्षाथा । आढ्ढ । आष्ट । आक्षाता । आक्षत । निरचेष । निरचेष्व । निरचैष्म । निरचेषीरित्यादि । समचषि । समचेष्वहि । समचेष्महि । इत्यादि । "हत्यामच" इत्येप् । सिप्तिषीरीट् । झलि से ख । अतौत्स । अतौत्स्व । अतौत्स्म । अतौत्सी । अतौत्त । अतौत्त । अतौत्सीत् । अतौत्ता । अतौत्सु । "सिजौ दे" इति से किद्वद्भावात् "ध्युड." इत्येप् न भवति । झलि से. ख । धि वेत्यखपक्षे झलो जश् झशीति सेर्जस्त्व । तस्य "झरो झरि स्वे" इति ख । अतुत्सि । अतुत्स्वहि । अतुत्स्महि । अतुत्था । अतुत्साथा । अतुद्ध्व । अतुत्त । अतुत्साता । अतुत्सत । अमृषि । अमृष्वहि । अमृष्महि । अमृथा । इत्यादि । ग्रुपुष्यादीत्यादिना अङ् । अमुच ।

अमुचाव । अमुचाम । इत्यादि । अमुक्षि । अमुक्ष्वहि । अमुक्ष्महि । इत्यादि ।

८१८ ॥ वेरितः । २ । १ । ६२। इरशब्देतो धोर्लुङि मे परतो वा अङ् भवति कर्तरि । पक्षे सिः । दे तु सिरेव । किद्वद्भावादनेप्च । अरुध । अरुधाव । अरुधाम । इत्यादि । अरौत्स । अरात्स्व । अरौत्स्म । अरौत्सीः । अरौद्ध । इत्यादि । अरुत्सि । अरुत्स्वहि । अरुत्स्महि । अरुद्धाः । अरुत्साथा । अरुद्ध । अरुत्त । अरुत्साता । अरुत्सत । अमुक्षि । अमुक्ष्वहि । अमुक्ष्महि । इत्यादि । अयुज । अयुजाव । अयुजाम । इत्यादि । अयौक्ष । अयौक्ष्व । अयौक्ष्म । अयौक्षीः । अयौक्त । अयौक्त । इत्यादि । प्रायुक्षि । प्रायुक्ष्वहि । प्रायुक्ष्महि । प्रायुक्थाः । इत्यादि । "वोर्णुत्रः,, इति वर्तमाने—

८१९ ॥ अतोऽनादेर्घेः । ५ । १ । ८२ । घे परतोऽनादेरिडादौ मपरे सावेप् वा भवति । इसैप् । अतानिष । अतानिष्व । अतानिष्म । अतानारित्यादि । पक्षे अतनिष । अतनिष्व । अतनिष्म । इत्यादि । दविधौ-थास्तयो — उविति सेरिति वेति च वर्तमाने—

८२० ॥ तन्भ्यस्थास्ते । १ । ४ । १५१ । तनादिभ्यः परस्य सेरुब्वा भवति थास्तयोः परतः । इत्युपि-क्ङितीति वर्तमाने-

८२१ ॥ हनूमनूयमूरमूनमूगमूवनतितनादेर्ङखं झलि । ४ । ४ । ३९ । हनादीनां वनतेस्तनादीनां च मूना, झलादौ किङति खे परे ङख भवति । इति नकारस्य ख । अतनिषि । अतनिष्वहि । अतनिष्महि । अतथाः । अतनिष्ठाः । अतनिषाता । अतनिष्व । अतनिढ्वं । अतत । अतनिष्ट । अतनिषाता । अतनिषत । पूर्ववद् सेरुवादि । अमनिषि । अमनिष्वहि । अमनिष्महि ।

इत्यादि। अकार्षं। अकार्ष्व। अकार्ष्म। अकार्षीः। इत्यादि। अक्रीप। अक्रृप्वहि, अक्रृप्महि। अक्रृथाः। इत्यादि। अक्रीप। अक्रीप्व। अक्रीप्म। अक्रीपीः। इत्यादि। अक्रीपि। अक्रीप्वहि। अक्रीप्महि। अक्रीष्ठाः। इत्यादि। "वृतो वा,, इति वर्तमाने।

८२२॥ लिङ्सिचोर्दे। ५। १। ९८। वृङ् वृञ् इत्येताभ्यां ऋकारान्ताच्च परौ यौ लिङ्सी तयोर्दविषययोरिड् वा भवति। यदेद्-तदा।

८२३॥ वृतो वाऽलिपसौ। ५। १। ९६। वृतः परस्य इटो वा दीर्घमतति न चेत्स इट् लौ लिङि लिटि मपरे सौ च भवति। इति दीर्घं। अवरीपि। अवरीष्वहि। अवरीष्महि। इत्यादि। इडभावे—सिलौ दे,, उरिति किद्वद्भावादेप् न भवति। अवृपि। अवृष्वहि। अवृष्महि। इत्यादि। ग्रहोऽलिटयेकाचो दीरिति दीर्घं।

८२४॥ ह्म्यन्तक्षण्श्वस्‌जाग्र्येदिताम्। ५। १। ९०। हमयान्तानां क्षण् श्वस् श्वि इत्येषां एदितां च गूनामिडादौ सावैप् न भवति। इत्यैपभावः। अगृहीषं। अगृहीष्व। अगृहीष्म। इत्यादि। अगृहीपि। अगृहीष्वहि। अगृहीष्महि। इत्यादि।

८२५॥ णिकम्श्रिद्रुश्रोः कर्तरि कच्। २। १। ५६। ण्यन्तेभ्यो धुभ्यः कम् श्रि द्रु श्रु इत्येतेभ्यश्च कर्तृवाचिनि लुङि परतः कच् भवति। सेरपवादः। ककारः कित्कार्यार्थः। चकारो "लिद्वच्चाचि घोः" इति विशेषणार्थः।

८२६॥ णौ कच्युङः प्रोऽशास्त्वक्ण्वृदितः। ५। २। १२८। शासु अक्खिन् ऋदित् इत्येतद्वर्जितस्य गोरुङः प्रदेशो भवति कच्परे णौ परतः।

८२७ ॥ द्वित्वेऽचि । १ । १ । ६८ । द्वित्वनिमित्तेऽचि अजादेशो स्थानिवद्भवति । स्थानिवद्भावेन "लिड्‌च्क्चि धोः" इति द्वित्वं । हलोऽनादेरित्यादि च कार्यं ।

८२८ ॥ घेर्दीर्नजादेः । ५ । २ । २१२ । णौ कच्परे ऽनक्खे णावनजादेर्गोश्चस्य घेर्दीर्भवति । णिखमङ् च । अचूचुरं । अचूचुराव । अचूचुराम । अचूचुरः । अचूचुरतं । अचूचुरत । अचूचुरत् । अचूचुरतां । अचूचुरन् ।

८२९ ॥ णौ कच्यनक्खे सन्वत् । ५ । २ । २११ । न विद्यतेऽकः खं यस्मिन् तदनक्खं तस्मिन्ननक्खे णौ कच्परे परतश्चस्य घिसञ्ज्ञके वर्णे परे सनीव कार्यं भवति । किं तत् । चस्येति "भृहाङ्मामिः,, इति च वर्तमाने—

८३० ॥ सन्यतः । ५ । २ । २०० । सनि परतश्चस्याकारस्य इत्वं भवति । इतीत्वं । घेर्दीर्नजादेरिति दीत्वादतरगत्वेन "छे च" इति तुक् । पुनः घित्वाभावान्न दीत्वं । अचिच्छदं । अचिच्छदावहि । अचिच्छदामहि । इत्यादि । अललक्ष । अललक्षाव । अललक्षाम । इत्यादि । अललक्षि । अललक्षावहि । अललक्षामहि । इत्यादि । अयूयुज । अयूयुजाव । अयूयुजाम । इत्यादि । अयौक्ष । अयौक्ष्व इत्यादि । "आदेरेकाचो द्वे" इति वर्तमाने—

८३१ ॥ अचः । ४ । ३ । ३। आदेरचः परस्य एकाचो द्वे रूपे भवतः । आदिद्वित्वापवादः ।

८३२ ॥ न स्फादौ न्द्रोऽयि । ४ । ३ । ४ । आदेरचः परे स्फादौ वर्तमाना नकारदकाररेफवकारा न द्विरुच्यतेऽयकारे । आर्चिच । आर्चिचाव । इत्यादि । आर्चिर्चि । आर्चिच्वहि । इत्यादि । अर्जावर । अर्जावराव । इत्यादि । प्रावरिरं । प्रावरिरव । इत्यादि ।

प्रावरीति । प्रावरीषि । प्राभृषि । प्रावृष्वहि । इत्यादि सविस्तरमभ्यूह्य । लुङ्गाह्नियते । "गम्यादिर्वात्स्यति,, इत्यधिकृत्य—

८३३ ॥ शोकानद्यतने लुट् । २ । ३ । ३ । वर्त्स्यत्यर्थे वर्तमानाद्धोर्लुट् भवति लटोऽपवादः शोकानद्यतने ॥ शोकाऽनुशोचन पश्चात्ताप इत्यर्थः । टकार पूर्ववत् । उकारः "स्यतासी लृलोः,, इति विशेषणार्थः ।

८३४ ॥ स्यतासी लृलोः ।२।१।४६। लृ इति लृटि लृङि लौ लुटि परतो मध्ये तासिस्त्यौ भवति । इकारो "हलुङः कृञ्चियनदित, इति विशेषणार्थः । तस्य "वल्यादेरिट्" इति इट् । ततो मिबादयः ।

८३५ ॥ लुटोऽन्यस्य डारौरस् ।२ । ४ । ९७। लुडादेशानामन्यसङ्ज्ञाना तिप् तस् झि इत्येतेषा यथासङ्ख्य डा रौ रस् इत्येते आदेशा भवति । "तास्यानेऽतेऽट्ठः,, इति तिप इकारस्य डादेशः। डिति टेरिति आस्तशब्दरूपस्य ख । "स्यगे स " इति वर्तमाने—

८३६ ॥ तासस्त्योः खं ।५ । २ । १६९। तासेरस्तेश्च सकारस्य ख भवति सकारादौ त्ये ।

८३७ ॥ रि । ५ । २ । १७० । तासेरस्तेश्च धो रेफादौ सकारस्य ख भवति । एवामादेशौ । भविताास्मि । भवितास्व । भवितास्म । भवितासि । भवितास्थ. । भवितास्थ । भविता । भवितारौ । भवितारः ।

८३८ ॥ एति हः ।५ । २ । १७१। तासेरस्तश्च सकारस्य हकारादेशो भवति एकारादौ त्ये परत । व्यतिभविताहे । व्यतिभवितास्वहे । व्यतिभवितास्महे । व्यतिभवितासे । व्यतिभवितासाथे । व्यतिभविताध्वे । व्यतिभविता । व्यतिभवितारौ । व्यतिभवितारः । एधिताहे । एधितास्वहे । एधितास्महे । एधितासे । इत्यादि ।

पक्तास्मि । पक्ताहे । सुनीदितास्मि । प्रध्वंसिताहे । सन्यातास्मि । संव्याताहे । होतास्मि । व्यतिहोताहे । हाताहे । प्रणिपूर्वाद्धावः—

८३९ ॥ नेर्गदनदपतपदघुमास्यतिहंतियातिवातिद्रातिप्सातिवपैवहीसम्युचिञ्देग्धौ । ५ । ४ । १२० । गेरदुरोऽन्त-शब्दाच्च परस्य नेर्गदादिषु परतो णत्वं भवति । इति णत्वं । प्रणिधातास्मि । प्रणिधाताहे । अत्तास्मि । व्यत्यत्ताहे । आतिशयिताहे । वक्ताहे । वक्तास्मि । देवितास्मि । व्यतिदेविताहे । सविताहे । सोताहे । "यतरोऽदुरोऽविकृतः" इति णत्वं । परिणद्धास्मि । परिणद्धाहे । अभिपेतास्मि । अभिपेताहे । अशिताहे । अद्धाहे । चेतास्मि । चेताहे । तोत्तास्मि । तोत्ताहे । मर्त्तास्मि । व्यतिमर्त्ताहे । मोक्तास्मि । मोक्ताहे । रोद्धास्मि । रोद्धाहे । भोक्ताहे । भोक्तास्मि । प्रयोक्ताहे । तनितास्मि । तनिताहे । कर्त्तास्मि । कर्त्ताहे । क्रीतास्मि । क्रीताहे । वरितास्मि । वरिताहे । गृहीतास्मि । गृहीताहे । चोरयितास्मि । छादयिताहे । लक्षयितास्मि । लक्षयिताहे । योजयितास्मि । योक्तास्मि । अर्चयितास्मि । अर्चयिताहे । वारयितास्मि । वारयिताहे । वरितास्मि । वरिताहे । इत्यादि सर्वमुन्नेय ॥ लृट् व्याख्यायते । गम्यादिर्वर्त्स्यर्तीत्यधिकृत्य—

८४० ॥ लृट् । २ । ३ । २ । वर्त्स्यत्यर्थे वर्तमानाद्धोर्लृट् भवति । टकारः पूर्ववत् । ऋकारः स्यतासी लृल्वोरिति विशेषणार्थः । तेनैव मध्ये स्येति विकरणः । इडयवादेशास्ततो मिबादयः । भविष्यामि । भविष्यावः । भविष्यामः । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यति । भविष्यतः । भविष्यंति । व्यतिभविष्ये । व्यतिभविष्यावहे । व्यतिभविष्यामहे । व्यतिभविष्यसे । व्यतिभविष्येथे । व्यतिभविष्यध्वे । व्यतिभविष्यते । व्यतिभविष्येते । व्यतिभविष्यंते । एधिष्ये ।

पक्ष्यामि। पक्ष्ये । नंदिष्यामि । घसिष्ये । व्यास्यामि । व्यास्ये । होष्यामि। व्यातिहोष्ये। हास्ये। श्रद्धास्यामि। श्रद्धास्ये। अतस्यामि। व्यत्यस्ये। शयिष्ये। वक्ष्यामि। वक्ष्ये। देविष्यामि। व्यतिदेविष्ये। प्रसविष्ये। प्रसोष्ये। नत्स्यामि। नत्स्ये। अभिपोष्यामि। अभिपोष्ये। अशिष्ये। अक्ष्ये। निक्षेप्स्यामि। निक्षेप्स्ये। तोत्स्यामि। तोत्स्ये।

८४१ ऋद्धन्नोः स्ये। ५। १। १४४। ऋकारांता-द्धन्तेश्चागे स्य इट् भवति। मरिष्यामि। व्यतिमरिष्ये। मोक्ष्यामि। मोक्ष्ये। रोत्स्यामि। रोत्स्ये। भोक्ष्ये। योक्ष्यामि। योक्ष्ये। तनिष्यामि। तनिष्ये। करिष्यामि। करिष्ये। क्रीष्यामि। क्रीष्ये। वरिष्ये। वरीष्ये। ग्रहिष्यामि। ग्रहीष्ये। चोरयिष्यामि। छादयिष्ये। ऊक्षयिष्ये। योजयिष्यामि। योक्ष्यामि। अर्चयिष्यामि। अर्चिष्ये। वारयिष्यामि। वरिष्यामि। वरीष्यामि। वरिष्ये। इत्यादि सप्रपंचम-धिगतव्य॥ लृडुदाह्रियते। गम्यादिर्वक्ष्यतीत्यधिकृत्य—

८४२॥ लिङ्हेतौ लृङ् क्रियाऽवृत्तौ। २। ३। १३०। हेतुस्तत्फलभूतौ लिङो हेतुर्वक्ष्यते। तत्र लिङो हेतौ वक्ष्यति काले लृङ् भवति क्रियायाश्चेदनिष्पत्तिरतिपत्तिर्भवति।

८४३॥ भूते। २। ३। १३१। भूते काले लिङ्हेतौ क्रियावृत्तौ लृङ् भवति। टकारः पूर्ववत्। ऋकारः स्यतासी लृलुटो-रिति सामान्यग्रहणार्थः। मध्ये स्यः। इडेववादेशाः। अडागमः। अभविष्य। अभविष्याव। अभविष्याम। अभविष्यः। अभविष्यतं। अभविष्यत। अभविष्यत्। अभविष्यतां। अभविष्यन्। दाविधौ-व्यत्य-भविष्ये। व्यत्यभविष्यावहि। व्यत्यभविष्यामहि। व्यत्यभविष्यथाः। व्यतिभविष्येथां। व्यत्यभविष्यध्वं। व्यत्यभविष्यत। व्यत्यभविष्येतां। व्यत्यभविष्यंत। ऐधिष्ये। ऐधिष्यावहि। ऐधिष्यामहि। सर्वमभ्यूह्य।

इति कर्तृपरिच्छेदः।

अथ भावकर्मकर्मकर्तृषु लिङादयो निर्दिश्यते ।

८४४ ॥ सिस्यसीयुट्तासां ञौ गृहाज्झनद्दशो जीट् । ४ । ४ । ६५ । ग्रहेरजंतेभ्यो हन्दृशिभ्यां च परेषां सि स्य सीयुट् तास् इत्येतेषां भावकर्मणि विहितानां जीडागमो भवति वा । पक्षे– इट् । जीटि–ञ्णित्यचः,, इत्येप् । तत्र-भावे–भाविषीष्ट, भविषीष्ट देवदत्तेन । कर्मणि अनुभाविषीय । अनुभविषीयेत्यादि । कर्मकर्तरि– अनुभाविषीय स्वयमेव । अनुभविषीय इत्यादि । सर्वं कर्तृवन्नेय । एधिषीष्ट । पक्षीष्ट । नदिषीष्ट । ध्वसिषीष्ट । "ञो" इति "आतः" इति चानुवर्तमाने—

८४५ ॥ कृञ्ञौ युक् । ५ । २ । ३७ । गोराकारा-तस्य युगागमो भवति कृति ञ्णिति जीटि च परतः । सव्यायिषीष्ट । सव्यासीष्ट । हायिषीष्ट । होषीष्ट । हायिषीष्ट । हासीष्ट । धायिषीष्ट । धासीष्ट । अत्सीष्ट । शायिषीष्ट । शयिषीष्ट । वक्षीष्ट । निधायिषीष्ट । निधिषीष्ट । तुत्सीष्ट । मारिषीष्ट । मृषीष्ट । मुक्षीष्ट । रुत्सीष्ट । भुक्षीष्ट । युक्षीष्ट । तनिषीष्ट । मनिषीष्ट । कारिषीष्ट । कृषीष्ट । क्रायिषीष्ट । क्रीषीष्ट । वारिषीष्ट । वरिषीष्ट । वृषीष्ट । ग्राहिषीष्ट । ग्रहिषीष्ट । चोरयिषीष्ट । चोरिषीष्ट । छादयिषीष्ट । छादिषीष्ट । लक्षयिषीष्ट । लक्षिषीष्ट । योजिषीष्ट । योजायिषीष्ट । युक्षीष्ट । अर्चिषीष्ट । अर्चयिषीष्ट । वारिषीष्ट । वारयिषीष्ट । वरिषीष्ट । वृषीष्ट । इत्यादि । सर्वं प्रत्येय । लिटि—भावे—बभूवे देवदत्तेन । कर्मणि-कर्मकर्तरि च– अनुबभूविरेह । इत्यादि । एधाचक्रे । पेचे । ननदे । दध्वसे । संनिन्ये । जुहवाचक्रे । जुदुरे । जद्दे । निदधे । आदे । जक्षे । शिश्ये । ऊचे । दिदिवे । प्रमुमुरे । नेहे । अभिदुदुरे । आनन्ते । चिस्ये । चिच्ये । तुतुदे । मम्रे । मुमुचे । रुरुधे । बुभुजे । युयुजे ।

तेने। मेने। चक्रे। चिर्क्षिपे। वव्रे। जग्रहे। चोरयाचक्रे। छादयाचक्रे। ऊक्षयाचक्रे। योजयाचक्रे। युयुजे। अर्चयाचक्रे। आनर्चे। वारयाचक्रे। वव्रे। इत्यादि पूर्ववज्ज्ञेय॥ लुङि-भावे-कर्मणि तवचन। "लुङि" इति "त चिः" इति च वर्तमाने—

८४६॥ चौ। २। १। ६८। भावर्थे भावकर्मणि लुङि तवचने परे धोश्चिर्भवति। सेरपवादः। चकार ऐवर्थः।

८४७॥ चेरुप्। ३। ४। १०२। चेदुत्तरस्य तोर्निर्मित्तभूतस्य उप् भवति। अभावि देवदत्तेन। अन्वभावि कम्बलो देवदत्तेन। कर्मकर्तरि-

८४८॥ कर्मवत्कर्मणा तुल्यक्रियः। २। १। ७६। स्नस्रादिवर्जितस्य धोः कर्मकर्तरि विहिते लकारे कर्मवत् कार्यं भवति। व्यतिदनादिन्य चौ प्राप्ते-

८४९॥ कर्मणि २। १। ६६। कर्तरीति वर्तते। कर्तृत्वेन विवक्षिते कर्मणि लुङि ते परतो चिर्वा भवति। पक्षे सिः। यदा सिस्तदा जेट्। अन्वभावि कम्बलः स्वयमेव। अन्वभाविष्ट। अन्वभविष्ट। इति त्रैरूप्य। अन्यत्र न्यायादभावाद् द्वैरूप्य। अन्वभाविषि। अन्वभविषि। अन्वभविष्महि। अन्वभविष्महि। इत्यादि। "दुहश्च" इति हलन्तनियमादन्यथा विकल्पो न भवति। एधि। अधायि। अदाम्ञाता। अनदि। मानदिषाता। अगमि। अग्मिषाता। अस्यायि। अस्यायिष्ट। अस्यासं। अस्यायिषाता। अहावि। अहावाता। अधायि। अधायिष्ट। अधित। अधायिषाता। आधिषाता। अवस्माता। अशायि। अशायि। अशाता। अदेवि। अदेविषाता। अनायि। अनायिष्ट। अनायिष्ट। अशोष्ट। अशायिषाता। अचायिषाता। अशोपाता। अनादि। अनसावा। अवारि। अधा-

विष्ट । असोष्ट । असाविषाता । असोषाता । आशि । आशिपाता । आक्षाता । निरचायि । निरचायिष्ट । निरचिष्ट । निरचायिषाता । निराचिषाता । अतोदि । अतुद्ध । अतुत्साता । अमारि । अमोचि । अमुक्षाता । त्रिरिति वर्तमाने-

८५० ॥ न रुधः । २ । १ । ६ । रुधेर्धोः कर्मकर्तरि ञि-र्न भवति । ञावित्ति नित्य प्राप्तः । कर्मणि तु भवत्येव । अरोधि । कर्मकर्तरि-अरुद्ध । अरुत्साता । अभोजि । अभुक्षाता । अयोजि । अयुक्षाता । अतानि । अतानिषाता । अमानि । अमानिषाता । अकारि । अकारिष्ट । अकृत । अकारिषाता । अकृषाता । अकारि-षत । अकृषत । अक्रायि । अक्रायिष्ट । अक्रीष्ट । अक्रायिषाता । अक्रीषाता । अवारि । अवारिष्ट । अवरिष्ट । अवरीष्ट । अवृत । अवा-रिषाता । आवारीषाता । अवरिषाता । अवरीषाता । अवृषाता । अग्रा-हि । अग्राहिषाता । अग्रहीषाता । "यग्दुहः" इति " नमः " इति चाधिकृत्य-

८५१ ॥ दुधिणिश्रिश्रंथिग्रंथिवचूड्नोध्र श्रिश्र । २ । । १ । ७३ दुधीना ण्यताना श्रि श्रथि ग्रथि वच इनु इत्येतेषां नमेध कर्मकर्तरि निर्यक् च न भवतः । इति कर्मकर्तरि ञिप्रतिषेधः । अचूचुरत स्वयमेव । कर्मणि अचोरि । अचोरिषाता । अचोरयिषाता । अचिच्छदत स्वयमेव । कर्मणि-अच्छादि । अच्छादिषाता । अच्छा-दयिषाता । अचच्छक्षत स्वयमेव । कर्मणि-अक्षाधि । अक्षधिषाता । अयूयुजत स्वयमेव । कर्मणि-अयोजि । अयोजिषाता । अयोजयिषाता । अयुक्षाता । आर्चिचत स्वयमेव । कर्मणि-आर्चि । आर्चिषाता । आ-र्चयिषाता । अवीवरत स्वयमेव । कर्मणि अवारि । अवारिष्ट । अवृत । अवारिषाता । अवारयिषाता । अवृषातामित्यादि स्वयमपि-

गतव्य । लुटि तासौ लोटि च विकल्पः । अन्यत्रेद् । भाविता । अनुभावितारे । अनुभाविताहे । एधिता । पक्ता । पक्ताहे । नंदिता । अभिनंदिताहे । ध्वसिता । ध्वसिताहे । सव्यायिता । संव्याता । सन्व्यायिताहे । सव्याताहे । हाविता । होता । हाविताहे । होताहे । हायिता । हाता । हायिताहे । हाताहे । परिधायिता । परिधाता । परिधायिताहे । परिधाताहे । अत्ता । अत्ताहे । शायिता । शयिता । अतिशायिताहे । अतिशयिताहे । वक्ता । वक्ताहे । देविता । देविताहे । साविता । सविता । सोता । साविताहे । सविताहे । सोताहे । परिणदा । परिणदाहे । साविता । सोता । साविताहे । सोताहे । चायिता । अग्राता । चायिताहे । अग्राहे । चायिता, चेता । चायिताहे । चेताहे । तोता । तोताहे । मारिता । मर्ता । परिमारिताहे । परिमरिताहे । मोक्ता । मोक्ताहे । रोद्धा । रोद्धाहे । भोक्ता । भोक्ताहे । योक्ता । योक्ताहे । तनिता । तनिताहे । मनिता । मनिताहे । कारिता । कर्ता । कारिताहे । कर्ताहे । क्रायिता । क्रीता । क्रायिताहे । क्रीताहे । वारिता । वरिता । वरीता । वारिताहे । वरिताहे । वरीताहे । ग्राहिता । ग्रहिता । ग्राहिताहे । ग्रहिताहे । चोरिता । चोरयिता । चोरिताहे । चोरयिताहे । छादिता । छादयिता । छादिताहे । छादयिताहे । अक्षिता । अक्षयिता । अक्षिताहे । अक्षयिताहे । योजिता । योजयिता । योक्ता । योजिताहे । योजयिताहे । योक्ताहे । अर्चिता । अर्चयिता । वारयिता । वरिता । वरीता । इत्यादि सर्वमभिलक्ष्य । लृटि लोटि तदभावेन च द्विधा नीतिः । भाविष्यते देवदत्तेन । कर्मणि-कर्मकर्तरि च-अनुभाविष्यते । अनुभविष्यते । एधिष्यते । पक्ष्यते । नदिष्यते । ध्वसिष्यते । व्यायिष्यते । व्यास्यते । हाविष्यते । होष्यते । हायिष्यते । हास्यते । विधायिष्यते । विधा-

स्यते । भत्स्यते । आतिशायिष्यते । अतिशायिष्यते । वक्ष्यते । देविष्यते । साविष्यते । सविष्यते । सोष्यते । नत्स्यते । अभिषाविष्यते । अभिषोस्यते । अशिष्यते । अक्ष्यते । निश्चायिष्यते । निश्चेष्यते । तोत्स्यते । मारिष्यते । मरिष्यते । मोक्ष्यते । रोत्स्यते । भोक्ष्यते । योक्ष्यते । तानिष्यते । मनिष्यते । कारिष्यते । करिष्यते । क्रायिष्यते । क्रीष्यते । वारिष्यते । वरिष्यते । ग्राहिष्यते । ग्रहिष्यते । छादिष्यते । छादयिष्यते । लक्षयिष्यते । लक्षिष्यते । योजयिष्यते । योजिष्यते । योक्ष्यते । अर्चिष्यते । अर्चयिष्यते । वारिष्यते । वारयिष्यते । वरीष्यते । वरिष्यते । इत्यादि सर्वमुन्नेय ॥ अथ लृङि जीटिङ्म्या द्विधा नीति । अभाविष्यत, अभविष्यत देवदत्तेन । कर्मणि-कर्मकर्तरि च अन्वभाविष्यत । अन्वभविष्यत । ऐधिष्यत । अपक्ष्यत । अनदिष्यत । अध्यसिष्यत । अन्यायिष्यत । अन्यास्यत । अहाविष्यत । अहोष्यत । इत्यादि सविस्तरमूहितव्य । एव परमप्रकृतेर्नव लकारा उदाहृता ॥

अथ सातिपु सन्नता

भवितुमिच्छतीति विगृह्य " किदृगुप्तिज. सन् भिषज्यादिर्निदाक्षमे" इति वर्तमाने-

८५२॥ तुमीच्छायां धोर्वाप् । २ । १ । ५ । "इच्छार्थे लिङ्लोड्" इत्यधिकृत्य-"तुमेककर्तृके" इति इच्छार्थे यो विहित तुम् तस्मिन्निच्छाया तुमि परतो धो परस्यसज्ञ भूत्वा सन् वा भवति यदा सन् तदा तुम उप्॥ "निमित्ताभावे नैमित्तकस्याप्यभाव " इति इटो निवृत्ति । भू सन् इति स्थिते नकार· "सन्यङो "इति विशेषणार्थ. । वल्लादेरिडिति प्राप्त । "न वृद्भ्य " कित्यूर्णन्त्रश्रुयुक." इति च प्रस्तुत्य-

८५३॥ सनि ग्रहिगुहश्च । ५ । १ । १२६ । ग्रहगुह-

म्यामुगंतेभ्यश्च धुम्यः सनि किति इट् न भवति । इति निषिद्धः । "किद्वद्" इति "सनि" इति च वर्तमाने–

८५४ ॥ सीकः । १ । १ । ९८ । इगंतस्य धोः सकारादौ सनि परतः किद्वद् कार्यं भवति । इति किद्वद्भावात् "गागयोः" इत्येष् न भवति ।

८५५ ॥ सन्यङोः । ४ । ३ । १३ । सन्नतस्य यङंतस्य च धोः आदेरचो द्वे रूपे भवतः । इति द्वित्व । हलोऽनादेरित्यादि चकार्यं । भू भू प इति स्थिते—

८५६ ॥ तदंता धवः । २ । १ । ४४ । ते सन्नादयोऽते येषां ते तदंताः धुसंज्ञा भवति । इति धुत्वे पूर्ववल्लडादिः । शपि "एप्यतः" इति पररूपं । बुभूषामि । बुभूषावः । बुभूषामः । इत्यादि । कर्मव्यतिहारे–व्यतिबुभूषे । व्यतिबुभूषावहे । व्यतिबुभूषामहे । इत्यादि । लङि–अबुभूष । व्यत्यबुभूषि । लिङि–बुभूषेय । व्यतिबुभूषेय । लोटि—बुभूषाणि । व्यतिबुभूषै । यकि–अतः" इसखं । बुभूष्यते देवदत्तेन । अनुबुभूष्यते कम्बलो देवदत्तेन । नेति जिरिति जीडिति च वर्तमाने—

८५७॥ भूषार्थसन्किरादीनां यक् च । २ । १ । ७४ भूषार्थानां सन्नतानां किरादीनां च कर्मकर्तरि यक् जि जीट् च न भवति । इति निषेधात् यक् न भवत्येव । कर्मवदित्यतिदेशात् दविधिश्च । अनुबुभूषते कम्बलः स्वयमेव । लङि—अबुभूष्यत । अन्वबुभूष्यत । अन्वबुभूषत । लिङि—बुभूष्येत । अनुबुभूष्येत । अनुबुभूषेत । लोटि–बुभूष्यता । अनुबुभूष्यतां । अनुबुभूषतामित्यादि । लोट् चाशिषि–बुभूष त्व । बुभूषताद् वा । बुभूषतु भवान्, बुभूष-

ताद् वा। लिङि च-अत. ख। बुभूष्यास। व्यतिबुभूषिषीय। लिटि–बुभूषाचकार। बुभूषाचकर। व्यतिबुभूषाचक्रे। लुङि–अबुभूषिष। व्यत्यबुभूषिषि। लुटि—बुभूषितास्मि। व्यतिबुभूषिताहे। लृटि—बुभूषिष्यामि। व्यतिबुभूषिष्ये। लुङि–अबुभूषिष्य। व्यस॰बुभूषिष्ये। इत्यादि। बुभूषिषीष्ट देवदत्तेन। अनुबुभूषिषीय। बुभूषाचक्रे। अबुभूषि। अन्वबुभूषि। अन्वबुभूषीष्ट कट स्वयमेव। कैं-बुभूषिता। अनुबुभूषिताहे। बुभूषिष्यते देवदत्तेन। अनुबुभूषिष्ये। लृङि-अबुभूषिष्यत। अन्वबुभूषिष्ये। इत्यादि। "अचः" इति द्वित्व।

८५८॥ प्राग्वत् सनः। १। २। ९८। सनः प्राच प्रकृते परस्य उकारस्य यथा दो भवति तदा सन्नतादपि। इति द। रर्धिधिप। इत्यादि।

८५९॥ सन्यतः। ५। २। २००। सनि परे यश्च तस्याकारस्य इकारादेशो भवति। पिपक्षामीत्यादि। निनदिषामि। इत्यादि। दिप्सिषे। विव्यासामि। विव्यासे। इत्यादि।

८६०॥ इन्यधा सनि। ४। ४। १३। हतेरिणे॰गिडादेशस्य गमेरजतस्य च धोर्दीर्भवति झलादौ सनि परत। जुहूषामि। जिहासे।

८६१॥ स्सनिमीमाघूरभलभशक्पतृपदोऽच इस्। ५। २। १७४। मी मा मूइत्येवमादीनामचः स्थाने इसादेशो भवति सकारादौ सनि परत चस्य चोप्। " स्गे सः " इति तकारः। मित्सामि। मित्से। " घस्लनूहृधधभ्सनि " इत्यदेर्घस्लभावस्य "स्गे स" इति तत्व। द्वित्वादि। जिघत्सामि। व्यतिजिघत्से। शिशयिषे। विवक्षामि। विवक्षे।

८६१ ॥ सनीवंतर्द्धभ्रस्जदम्भुस्वृभियूर्णुभरज्ञपिसन् सन्यतेः । ७ । २ । १०४ । इवन्तेभ्यो धुभ्यः ऋधादिभ्यश्च सनि परतः इट् वा भवति । इट्पक्षे—बुभ्रू ,, इत्येप् । दिदेविषामि । इडभावे "किद्वत्सनि सीकः" इति वर्तमाने—

८६३ ॥ हलि । १ । १ । ९९ । सकारादौ सनि परतो यो हल् तस्मिन् परे य इक् तस्य किद्वद् कार्यं भवति । इत्येप् निषिद्धः । "छ्वः शूठ् डे च" इति वस्य ऊठ् यण् तत्रो द्वित्वादि । दुद्यूषामि । पूर्ववदिडभावः कित्त्वं च ।

८६४ ॥ पाणि चाण्णिस्तोरेवाऽस्वित्स्वत्सहः । ५ । ४५ । पाणि पत्वभूते सनि परतः चादिण्णतात् परेषा ण्यन्तानां स्विदिस्वदिसहवर्जितानां स्तौतेरेव सकारस्य षत्वं भवति । इति नियमादषत्वं । प्रसुसूषे । निनत्सामि । निनत्से ।

८६५ ॥ सुवः सन्स्ये । ५ । ४ । ९७ । सुनोतेः सनि स्ये च परे षत्वं न भवति । सुसूषामि । सुसूषे ।

८६६ ॥ स्मिङ्पूङ्ऋञ्ज्वशः सनि । ५ । १ । १४८ । स्मिङ् पूङ् ऋ अज् अश् इत्येतेभ्यः इट् भवति सनि परे । अशिशिषे । निधिकिषामि । निधिचिषामि । निधिकिषे । निधिचिषे । "हलि" इति "किद्वद्भावादेप् न भवति । तुतुत्सामि । तुतुत्से । "हन्यर्चां सनि" इति दीः । "ऋतामिड्वोः" इति वर्तमाने—

८६७ ॥ पुवादुत् । ५ । १ । ८५ । पवर्गाद् वकाराच्च धोरवयवात् परस्य ऋकारस्य उकारादेशो भवति । रतत्वं । "दोर्वोर्णिह्व." इति दीः । मुमूर्षे । मुमुर्षामि । मुमुर्षे । कर्मकर्तरि—

**८६८ ॥ वौन्मुचो घेः । ५ । १ । १७८ ।** घिसंज्ञकस्य मुचेरचः ओकारादेशो भवति वा सनि सकारादौ परतश्चस्योप् । भूपेत्यादिना न यक् । मोक्षत । मुमुक्षते वासः स्वयमेव । रुरुत्सामि । रुरुत्से । वुभुक्षे । युयुक्षामि । युयुक्षे । सनीवंतेत्यादिना वेट् । तितनिषामि । इडभावे—

**८६९ ॥ तनो वा । ४ । ४ । १४ ।** तनोतेर्झलादौ सनि परतो वा दीर्भवति । तितांसामि । तितंसामि । तितनिषे । तितांसे । तितंसे । मिमनिषे । हन्यचा सनीति दीः ।

**८७० ॥ ऋतामिद्धोः । ५ । १ । ८६ ।** ऋकारान्तस्य गोर्धोरिकारादेशो भवति । रतस्त्वं । दीत्व । चिकीर्षामि । चिकीर्षे । चिक्रीषामि । चिक्रीषे । वृतो वा ळिमसाविति वर्तमाने—

**८७१ ॥ सनीट् । ५ । १ । ९७ ।** वृतः सनि परतो भोर्वेट् भवति । इडभावे-पुवादुद्" इत्युत्वादि । विवरिषे । विवरीषे । वुवूर्षे । सनि ग्रहगुहश्चेति वेट् ।

**८७२ ॥ रुद्विद्मुषग्रहस्वपप्रच्छां सनि च । १ । १ । ९७ ।** रुद् विद् मुष् ग्रह् स्वप् प्रच्छ इत्येतेषा सनि क्त्वात्ये च परे किद्वद् भवति । किद्वद्भावाद्—वशिव्यधि—इत्यादिना यण इक् । ढत्वकत्वे भष्भावादि । जिघृक्षामि । जिघृक्षे । चुचोरयिषामि । चिच्छादयिषामि । लिलक्षयिषामि । लिलक्षयिषे । युयोजयिषामि । युयुक्षामि । अर्चिचयिषामि । अर्चिचिषे । विवारयिषामि । विवरीषामि । वुवूर्षामीत्यादि । सर्वं पूर्ववत् । कर्तरि नवलकारेषु भावे कर्मणि कर्मकर्तरि च यथासम्भवमभ्यूह्य । इति सन्नताः ।

मृशमभीक्ष्णं वा भवतीति विगृहे—

८७३ ॥ घोर्यङ् भृशेऽभीक्ष्ण्ये गुभ्रुचेः । २ । १ । १२ ।
शुभिरुचिवर्जिताद्धोः भृशेऽभीक्ष्ण्ये चार्थे वर्तमानात् यङ्प्रत्ययो भवति ।
ङकारो ङित्कार्यार्थः । सन्यङोरिति द्वित्वं । भूयभूय इति स्थिते—
ह्स्वोऽनादेरित्यादि चकार्यं ।

८७४ ॥ यङ्लुपोरप्यकिदाद्यक्तः । ५ । २ । २०३ ।
यदि यङ्लुपि च चस्याकित आकारांतहाक्वर्जितस्य एप् भवति
दीर्घं च । इति इक एवन्यत्र दीः । वोभूय् इत्यतः पूर्ववल्लडादयः । "ङेदि-
तो दः" इति दः । एत्वं । वोभूये । वोभूयावहे । इत्यादि । कौ-यक्ति-

८७५ ॥ अतः । ४ । ४ । ५६ । गोरकारांतस्य अतः
खं भवत्यगे परतः । बोभूय्यते देवदत्तेन । कर्मणि कर्मकर्तरि च—
अनुबोभूय्ये, अनुबोभूय्ये स्वयमेव । लङि-अबोभूये । कौ—अबो-
भूय्यत । अन्वबोभूय्ये । लिङि—बोभूयेय । कौ—बोभूय्येत ।
अनुबोभूय्येय । लोटि-बोभूयै । कौ—बोभूय्यतां, अनुबोभूय्यै ।
लिङाशिषि—बोभूयिषीय । कौ—बोभूयिषीष्ट देवदत्तेन । अनु-
बोभूयिषीय । लिटि—बोभूयांचक्रे । बोभूयांबभूव । बोभूयामास ।
कौ—बोभूयांबभूवे । अनुबोभूयांबभूवे । बोभूयामास । "कृभ्व-
स्तित्र्, इत्यस्तिग्रहणसामर्थ्यात् "अस्तेर्भूर्भू" इति अस्तेर्भूभावो न
भवति । लुङि-अबोभूयिषि । कौ-अबोभूयि देवेन । अन्वबोभूयि ।
अन्वबोभूयिष्ट वा । अन्वबोभूयिषातां । लुटि-बोभूयिताहे । कौ—
बोभूयिता देवेन । अनुबोभूयिताहे । लृटि—बोभूयिष्ये । कौ—
बोभूयिष्यते देवेन । अनुबोभूयिष्ये । लृङि—अबोभूयिष्ये ।
कौ—अबोभूयिष्यत देवेन । अन्वबोभूयिष्ये ।

८७६ ॥ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोः । २ । १ । ३१ ।

सूचि सूत्रि मूत्रिभ्य एव हलाद्यनेकाच्भ्योऽद्यश्चार्यूर्णुभ्य एव चाजादिभ्यो भृशाभीक्ष्ण्ये यङ् भवति नान्येभ्यः। इति नियमादेव 'एध वृद्धौ, इत्यस्य यङ् नास्ति। तथा–पापच्ये। डौ यकि–अतः खे च–

८७७ ॥ हलो यः। ४। ४। ५४। हलन्ताद् गोः परस्य यकारस्य ख भवति अगे परत.। पापच्यते देवेन। कर्तरि भावे कर्मणि च कर्मकर्तरि च समान। अपापच्यत। पापच्येत्। पापच्यता। पापचाचक्रे। पापचिषीष्ट। अपापचिष्ट। पापचिता। पापचिष्यते। अपापचिष्यत। इत्यादि। अपापचि देवेन। नानद्यते। यङुपोरिति वर्तमाने–

८७८ ॥ नीग् वंचुस्रंसुध्वंसुभ्रंसुकसपतपदस्कंदां। ५। २। २०४। वचुप्रभृतीना यङुवताना चस्य नीगागमो भवति। दनीध्वस्यते। "लिटीम्यणः साचोऽर्य्यज्य" वशो याके" इति च वर्तमाने–

८७९ ॥ स्वस्यमृव्यः। ४। ३। २९। स्वस् स्यम् व्या इत्येतेषा यकि साचोऽर्य्यपरस्य यण इग् भवति। वेवीयते। "दीइच्च्यकृद्ग" इति दीः। जोहूयते।

८८० ॥ गत्यर्थात् कुटिले। २। १। ३४। गत्यर्थात् कुटिले वर्तमानात यङ् भवति। जाहायते। भूमेत्यादिनेव। अभिदिधीयते। तन्नियमाददेर्यङ् नास्ति। यि कुटित्ययङ्,, शाशय्यते। वावच्यते। देदीव्यते। डौ देदीव्यते देवेन। लिङ्गत् क्रन्यामिति दीत्वस्य पूर्वत्रासिद्धत्वादेप् प्राप्तः। "परेऽच प्राच" इत्यत्खस्य स्थानिवद्भावान्नास्ति। देदिवाचक्रे। सोपूयते। नानद्यते। सोपूयते। अशाश्यते। चेचीयते। तोतुद्यते। अतोतुद्यत। तोतुद्येत्। तातु-

षतां । तोतुदिषीष्ट । तोतुदांचक्रे । अतोतुदिष्ट । अतोतुदि । तोतुदिता । तोतुदिष्यते । अतोतुदिष्यत । "रीङ् ऋतः" इति रीङादेशः । मेम्रीयते । मोमुच्यते । रोरुध्यते । बोभुज्यते । योयुज्यते ॥

८८१ ॥ ङस्यातो नुक् । ५ । १ । २०५ । ङसङ्कांतस्य गोर्यङ्लुपोर्यश्चस्तस्याकारांतस्य नुगागमो भवति । तस्यानुस्वारादिः । तंतन्यते । ममन्यते । चक्रीयते । चेक्रीयते । बेब्रीयते । वशित्यादिना यण इक् । यङ्लुपेरिति वर्तमाने—

८८२ ॥ रीगृत्वतां । ५ । २ । २०९ । ऋकारवतो गोर्यङि चस्य रीगागमो भवति । जरीगृह्यते । इत्यादि । सर्वं पूर्ववन्नय ॥ इति यङन्ताः । किं च—

८८३ ॥ यङ उप् । १ । ४ । १४४ । यङो बहुलमुप् भवति । लखे त्याश्रयन्यायेन द्वित्वादि । ततो लडादिः । चर्करीत चेत्यदादिषु मवत्सु पाठात् यङ्लुबंतस्यादादित्वं । तेन शप उप् मविधिश्च ।

तिपा शपानुबंधेन निर्दिष्टं यद् गणेन च ।
यत्रैकाच्ग्रहणं किंचित् पंचैतानि न यङ्लुपि ॥१॥

इति यङो ङित्वाद् स्थानिवद्भावेन दो न भवति । थस्य गे पित्यचि हत्युप्योरौ" इति वर्तमाने—" भ्रुव ईद्" इत्यनुवर्त्य—

८८४ ॥ यङ्तुरुस्तोर्व्बहुलं । ५ । २ । १९२ । यङ्बंतात् रु स्तु इत्येतेभ्यश्च परस्य हलादेः पितो गस्य बहुलं ईडागमो भवति । पित्स्वेव न ङित्सु । ङस्य थादित्वत् । बोभवीमि । बोभोमि । बोभूवः । बोभूमः । बोभवीषि । बोभोषि । बोभूथः । बोभूथ । बोभवीति । बोभोति । बोभूतः । बोभवति । थवित्सेरिति ङे । अबोभव । अबोभूव । अबोभूम । अबोभवीः ।

अबोभूत । अबोभूत । अबोभवीत् । अबोभोत् । अबोभूता । अबोभवु । बोभूया । बोभूयाव । बोभूयाम । इत्यादि । सेर्हेरादेशो ङिद्वेद्भावाद् नास्ति । बोभवानि । बोभवाव । बोभवाम । बोभूहि । बोभूतात् वा । बोभूत । बोभूत । बोभवीतु । बोभोतु, बोभूतात् वा । बोभूता । बोभवतु । बाभूयते देवन । इत्यादि । बोभूयात् । बाभूयास्ता । बोभूयांचकार । अबोभवीत् । अबोभवीष्टा । अबोभवीषु । प्रकृतिग्रहणे यङ्लुबन्तस्यापि ग्रहणमिति क्वचिदेव न सर्वत्र । तेन-सुभू इत्यादिना सेरुप् नास्ति । तथा च कश्चित्-

लुङ्लिट्प्रतिपदोक्तानि सानुबन्धकृतानि च ।

यङ्लुबन्तस्य नेष्टानि सङ्ख्यागणकृतानि च ॥ २ ॥

इत्याह । परे पुनरत्राप्युपमिच्छति । अबाभोत । अबोभूता । अबाभवुरित्यादि । बोभविता । बोभवितारौ । बोभवितार । बाभविष्यति । अबोभविष्यत् । ङीटादि च-बोभाविषीष्ट । बोभविषीष्ट । बोभवाचक्र । अबोभावि । इत्यादि । पापचामि । पापच्मि । पापच्व । पापच्म । पापचीपि । पापक्षि । पापक्थ । पापक्थ । पापचीति । पापक्ति । पापक्त । पापचति । नानदीति । नानत्ति । दनीध्वसीति, दनीध्वस्ति वा । वावाति । वाव्याति । जोहवीति । जोहोति । जोहूत । जाहाति । जाहाति । जाहीत । दाधेति । दाधाति । धात्त ।

८८५ ॥ थस्य गे पिरयचि । ५ । २ । ९५ । थसङ्कस्य गोर्धेरुक एप्न भवति पिलजादौ ग परत । देदिवीति अनिड्पक्षे ध्युङ ,, इत्येपि "व्यो ख वल्कौ" इति वखे च सति देदेति । "छस्य झल्कव्यो क्ङिति" इत्येदनुवर्त्य-छु शूठ् खे चेति झलि कौ च केचिदूठमिछति । तेनोठि यण्येपि च कृते-दद्याति । देद्यूत । देदिवति । देदिवाचकार । सोपवीति । सोपाति । नानहीति ।

नानदि । सोपवीति । सोपोति । अशाशीति । अशाष्टि । चेचयीति । चेचेति । तोतुदीति । तोतोत्ति । रीगृदन्तानामिति वर्तमाने—

८८६ ॥ रुग्रिकौ चोपि । ५ । २ । २१० । ऋत्वतो धातोर्यङ्लुपि चस्य रुग् रिक् चागमो भवति । मर्मरीति । मरिमरीति । मरीमरीति । मर्मर्ति । मरीमर्ति । मरिमर्ति । चर्करीति । चरिकरीति । चरीकरीति । चर्कर्ति । चरिकर्ति । चरीकर्ति । जर्गृहीति । जर्गर्ढि । इत्यादि नेय । वृतुधौ वृत्तौ । वर्वृतीति । वर्वर्ति । इत्यादि । गृधु अभिकाङ्क्षायां । जर्गृधीति । जर्गर्द्धि । इत्यादि । एधि-अजगृद्ध । इडभावे-ध्युडः,, एप् । सिपः ख । भष्भावः । ततो धकारस्य जस्त्व । "सिपि रिर्वा" इत्यधिकृत्य-दः,, इति विकल्पेन रिः । रो री-ति पूर्वस्य रेख । द्विरुङादिः " इति दीः । अजगर्धाः । अजगृद्ध । अजगृद्ध । अजगृधीत् ॥ अजगर्धि । अजगृद्धा । अजगृधुः । इत्यादि सम्प्रपञ्चप्रयोगतद् प्रयोग्यं ॥ इति यङ्लुगन्ताः ॥

भवति कश्चित् त भवतं भावितस्य भवन वा प्रयोजयतीति विगृह्य-णिजिति यति च प्रस्तुत्य—

८८७ ॥ हेतुमति । २ । १ । ३९ । हेतुमति त्वर्थे धोर्णा णिच् भवति । णकार वृद्ध्यर्थः । चकारो णाविति सामान्यग्रहणाविघातार्थः । द्वागादेशो । पुसङ्ग । च । ततः पूर्ववल्लडादयः । भावयामि । भावयावः । भावयामः । इत्यादि ।

८८८ ॥ णिचः । १ । २ । ८६ । णिजन्ताद्धोः फलेशे कर्तरि दस्य दो भवति । भावये । भावयावहे । भावयामहे । इत्यादि । औ-यकि णेः खं । भाव्यते । अभाव्यत । भाव्यत । भाव्यतां । कर्मकर्तरि—दर्पिणिश्रिथिवचूर्योध त्रिधेति णिजन्तदा

त्रियकौ न भवतः। तत. शबादयः। भावयते स्वयमेव। इत्यादि। अभावयत। भावयेत। भावयता। कौ—अभाव्यत देवेन। अन्वभाव्यत। अभावयत्। भावयेत्। भावयीत। कौ-भाव्येत। देवेन। कर्मकर्तरि यक् नास्ति शबेव। भावये स्वयमेव। भावयतु। भावयतात् वा। भावयतां। को—भाव्यतां। कर्मकर्तरि-भावयतां। भाव्यात्। भावयिषीष्ट। कौ-भविषीष्ट। भावयिषीष्ट देवेन। भावयाचकार। भावयाबभूव। भावयामास। भावयाचक्रे। भावयाबभूवे। भावयामाहे। एति इः,, इति हकार। णिश्रिद्रुस्रोः कर्तरि चजिति कच्। भावि अ अम् इति स्थिते-लिड्डुचूकाचि धोरिति द्वित्व ततो यणादेशस्तदपवाद पुनरियादिशः णे खु च प्राप्त। परत्वात् णेरिति णेः ख। "णौ कच्युङ प्रोऽशास्वक्ल्यृदित" इत्युङ; प्रादेश। "स्थानीवानल्विधौ" परेऽच. प्राच.,, इति च प्रस्तुत—

८८९॥ द्वित्वेऽचि। १। १। ६८। द्वित्वनिमित्तेऽचि अजादेशो द्वित्वे कर्तव्ये स्थानिवद् भवति। इति स्थानिरूप। एतच्च—

८९०॥ ओः पुयण्ज्ये। ५। २। २१०। सनि परे द्विर्भावे चस्य उवर्णस्य पवर्गे यणि जकारे अकारे परे इकारादेशो भवति। इति इकारः। इति चल्योवर्णस्येत्यशासनाज्ज्ञायते। तेन भू इ अ अम् इति स्थिते पश्चाद्द्वित्व चकार्य। पूर्ववत् णिखैवावादेशप्रादेशा। "घौ कच्यनक्खे सन्वद्" इति सन्वद्भाव। "ओः पुयण्ज्ये" इति चस्येत्व। घेर्दीरनजादेरिति दीत्व। अबीभव। अबीभवे। इत्याद्युन्नेय॥ एधयामि। लुङि-ऐदिध। पाचयामि। अपीपच। कौ-अभावि देवेन। अभाविष्ट। अभावयिषि। कीटि णिख। अबीभव। लुटि—भावयितास्मि। भावयिताहे। कौ-भाविता देवेन। भाविताहे। भावयिताहे। भावयिष्यते। कौ-भविष्यते। भावयिष्यते।

यामि । अयूयुज । अर्चयामि । आर्चिच । वारयामि । अवीवरामित्यादि योज्य ॥ घटादीना तु विशेष । गोहेरूद्धुड, इति "दोषो णाविति चाधिकृत्य ।

८९५॥ घटादिकगेवनुजनीजॄष्णसक्नसरञ्जयमोऽपर्यपस्खदकमूचम्यमः म्रोऽम्ञ्योस्तु दीर्वा । ४ । ४ । ९० । परि अप पूर्वस्खदिवर्जिताना घटादीना कगे वनु जनी जॄष् ष्णस् क्नस् राजि इत्येतेषा क्रमिचमिअमिवर्जितानाममताना च गूनामुङ म्रो भवति णौ परतः अम्ञि परे तु णौ दीर्वा भवति । घटै चेष्टाया । घटयामि । अघटि । अघाटि । व्यथैप् चलभीत्या । व्यथयामि । अव्यथि । अव्याथि । कगे इति सौत्रा धातु । कगयति । अकगि । अकागि । वनुङ् याचने । वनयति । अवनि । अवानि । जनीङ् प्रादुर्भावे । जनयति । अजनि । अजानि । जॄषृ वयोहानौ । जरयति । अजरि । अजारि । ष्णस् नीरसने । स्नसयति । अस्नसि । अस्नासि । क्नस् ह्वारणदीप्त्या । क्नसयति । अक्नसि । अक्नासि । रञ्जौञ् रागे ॥ हृद्धुड, इति श्नान्तखमिति रजेरिति चाधिकृत्य—

८९६ ॥ णौ मृगरमणे । ४ । ४ । २७। रजेरुङो नकारस्य ख भवति णौ परतो मृगाणा क्रीडायामर्थे । रजयति मृगान् व्याध । अरजि । अराजि । गम्लृ गतौ । गमयति । अगमि । अगामि । शमु दमु उपशमने । दमयति । अदमि । अदामि । अपर्यपस्खदादेरिति किं ? स्खदैप् खनने । परिस्खादयति । अपस्खादयति । पर्यस्खादि । अपास्खादि । कमङ् कान्तौ । कमूर्तेणिङीयाविति णिङ् । कामयते । चमु अदने । आचामयति । अमु रोगे । आमयति ।

८९७ ॥ शमोऽदर्शे । ४ । ४ । ८१ । शमोऽदर्शेऽर्थे वर्तमानस्योङ शस्य म्रो भवति णौ परत. अम्ञि परे तु वा दीर्भवति ।

बुभूषयिषीय । बुभूषयाचकार । कौ—बुभूषयाचक्रे । बुभूषया बभूवे । "णिकमश्रिद्रुस्रो कर्तरि काजिति कचि द्वित्व । बुभूषि अ अमिति स्थिते—"चस्यैके" इति चस्य बु बु इति द्वित्व । हलोऽनादेरिति उचादि । अबुबुभूषम् । "चस्यैके" इति चस्य द्वित्वाभावे अबुभूष । अबुबुभूषे ॥ कौ-अबुभूषि । अबुभूषिषि । अबुभूषयिष्ट । कर्मकर्तरि ञिट् नास्ति । बुभूषयितास्मि । बुभूषयिताहे । कौ-बुभूषिताहे । बुभूषयिताहे । बुभूषयिष्यामि । बुभूषयिष्ये । कौ-बुभूषिष्ये । बुभूषयिष्ये । अबुभूषयिष्यं । अबुभूषयिष्य । कौ-अबुभूषिष्ये । अबुभूषयिष्ये ॥ इत्यादि ॥ बोभूयते कश्चित्तमन्य प्रयुङ्क्ते तस्मिन् यङतात् णिचि धुत्वे ळडादय । बोभूययामि । बोभूयये । अबोभूयय । अबोभूयये । बोभूययेय । बोभूययय । बोभूययानि । बोभूययै ॥ इत्यादि सनतणिजतेन तुल्य ॥ बोभवीति कश्चित्तमन्य. प्रयुङ्क्ते इति यङ्लुपताण्णिचि—बोभवयामि । बोभवये । इत्यादि । अबोभवय । अबोभवये । बोभवयेय । बोभवयेय । बोभवयानि । बोभवयै । इत्यादि ॥ भावयति कश्चित्तमन्यः प्रयुङ्क्ते इति णिजतात् णिचि—पूर्वस्य ण ख । भावयामि । भावये । इत्यादि । अबीभवं । अबीभवे । एधयामि । ऐदिध । पाचयामि । अपीपच । इत्यादि । सन्नतात् सन्नास्ति । "न सन" इति निषधात् । बोभूयितुमिच्छतीति यङतात्सनि यलोदरिडिताटि अतः से द्वित्वे च सति "प्राग्वद् सनः" इति दः । बुबोभूयिषे । द्वित्वाभावे-बोभूयिषे । कौ-बोभूयिष्यते । अबुबोभूयिष्य । अबोभूयिषे । कौ-अबोभूयिष्यत । अबुबोभूयिष्ये । बोभूयिषेम । कौ-बोभूयिष्येत । अबुबोभूयिष्येय । बोभूयिषै । कौ-बोभूयिष्यता । अबुबोभूयिष्यै ॥ इत्यादि पूर्ववदुनेयं ॥ बोभवितुमिच्छतीति यङ्लुपतात् सनि-बुबो-

भविषामि । बोभविषामि । कर्मे—बोभविष्यते । अनुबोभविष्ये । इत्यादि नेव। भावयितुमिच्छतीति णिजतात्सनि इटि "द्विर्वचनेऽचि" इति णेरेचरादेशयोः स्थानिवद्भावः । "ओः पुयण्ज्ये" इति ज्ञापकात् णौ च ऐचावादेशयोः स्थानिवद्भावः । भू इ इति स्थिते भू भू इति द्वित्वमन्यत् पूर्ववत् । बिभावयिषामि । बिभावयिषे । कर्मणि—बिभावयिष्ये । एव—एदिधयिषामि । पिपाचयिषामि । इत्यादि ॥ बुभूषयितुमिच्छतीति वाक्यमेव ॥ सनतणिजतात् सनि-द्वित्वादौ च-बुबोभूषयिषति । बुबोभूषयिषते । द्वित्वाभावे—बोभूषयिषति । बोभूषयिषते । यङ्लुणिजतात् सनि-द्वित्वे च—बुबोभावयिषति । बुबोभावयिषते । द्वित्वाभावे—बोभावयिषति । बोभावयिषते ॥ णिजतणिजतात् सन्नोदाह्रियते णिजतसनतादविशेषात् । एताभ्य एवोदाहृतपञ्चप्रकृतिभ्यो णिन् विधीयते । यङन्तसनतात् णिचि—बुबोभूषयति । बुबोभूषयते । लुङि-चङि द्वित्वे च—अबुबुबोभूषिषत् । अबुबुबोभूषिषत । द्वित्वाभावे—बोभूषिषयति । बोभूषिषयते । अबोभूषिषत् । अबोभूषिषत । यङ्लुगन्तसनताण्णिचि—बुबोभविषयति । लुङि—चङि—अबुबुबोभविषत् । अबुबुबोभविषत । द्वित्वाभावे—बोभविषयति । अबोभविषत् । णिजतसनतात् णिचि—बिभावयिषयति । लुङि—चङि—अबिबिभावयिषत् । द्वित्वाभावे—अबिभावयिषत् । यङन्तणिजतसनताण्णिचि-द्वित्वे च—बुबोभूषयिषयति । अबुबुबोभूषयिषत । द्वित्वाभावे—बोभूषयिषयति । अबोभूषयिषत ॥ यङ्लुगन्तणिजतसनताण्णिचि—बुबोभावयिषयति । लुङि—चङि—अबुबुबोभावयिषत् । द्वित्वाभावे—बोभावयिषयति । अबोभावयिषत । इति पञ्चमी निर्दिष्टिता: । इत्यादिर्वं विभाव्य यथ सैन्धवमनूह्य । एव—एते निरुपितप्रकृतिभ्यो विहिता. । तदन्त-

प्रकृतेस्सन्यङ्लुङ्णिच् णिङ् सन्नादेर्यङादितः ।
सन्यङ्ण्यादेस्सन्यङ्सन्नादेर्णिज्यङ्णिच्सन्नादेश्चतस्रोऽपि ॥

अथ कण्ड्वादयः ।

कण्डूञ् गात्रघर्षणे ।

९०० ॥ कण्ड्वादेर्यक् । २ । १ । ४० । कंडूञ् इत्येवमादिभ्यो धुभ्यो यगित्ययं स्वो भवति । ककारः किल्कार्यार्थः । पुनर्धुसंज्ञायां—पूर्ववल्लडादयः । कण्डूयति । कंडूयते । अकंडूयत् । अकडूयत । कण्डूयेत् । कंडूयेत । कडूयतु । कडूयतां । कडूय्यात् । कण्डूयिषीष्ट । कंडूयांचकार । कडूयाचक्रे । अकडूयीत । अकडूयिष्ट । कडूयिता । कंडूयिष्यति । कंडूयिष्यते । अकडूयिष्यत् । अकडूयिष्यत । सनि—सन्यङोरित्यादेरेकाचो द्वित्वं भवत्येकेषां मतं । चिकण्डूयिषामि । इत्यादि । यकस्तृतीयस्येत्यत्र "अचः" इति "एके" इति च विभागापेक्षयानुवर्तमाने—तेनादेरनादेश्चाचस्तृतीयस्यैकाचो द्वे भवतः" इत्यपरे । तेषां कण्डूयियिषामि । इत्यादि । यगंतस्य यङ्यङ्लुपौ न संभवतः । णिचि—कडूययति । कण्डूययते । अकंडूययत् । अकडूययत । कण्डूययेत् । कडूययेत । कण्डूययतु । कण्डूययतां । कण्डूय्यात् । कण्डूययिषीष्ट । कण्डूययाचकार । कण्डूययांचक्रे । लुङि—अचकण्डूयत ॥ यकस्तृतीयस्येत्यत्र "अचः" इत्यनुवर्तते इत्यस्मिन् दर्शने द्वित्वादिर्नास्ति "अचः" इत्यस्याभावात्—अकंडूयत । "अचः,, इति नानुवर्तते इत्यत्र तु–य य इति द्वित्वं । अकडूययत । कण्डूययिता । कण्डूययिष्यति । कण्डूययिष्यते । अकडूययिष्यत् । अकंडूययिष्यत । एव–मतु–रोषप्रीणनयोः । मंतूये इत्यादि । वल्गु माधुर्ये । वल्गयामि । इत्यादि । असू परगुणासहने । असूयामि । इत्यादी ।

सनि—असूयियिषामि । इत्यादि । असूयषामि । इत्यादि । आसूयत । हृणीङ् रूपलज्जयोः । हृणीयते । इत्यादि । सुखदुःखे तत्करण "अतः" इत्यख । सुखयामि । इत्यादि । सनि—हलो य', इति यख । सुसुखयामि । इत्यादि । णिचि—सुखयायामि । इत्यादि । "वा क्य" इति सूत्रे क्यषक्रोर्वेति केचित् पठति । तेषां सुखयामीत्यादि ॥

॰ इति कण्ड्वादयः ।

प्रकृतेः सुबन्तप्रकृतिकाः ।

आत्मनः पुत्रमिच्छतीति विग्रहे—

९०१ ॥ स्येपः काम्यः । २ । १ । ७ । स्वस्यात्मनः सर्वधि बदिवंत तस्मादिच्छायामर्थे काम्यस्त्यो भवति वा । "तदन्ता धवः" इति धुसञ्ज्ञाया—सुपो धुमृदोरिति सुप उप् । ततः पूर्ववल्लडादयः । पुत्रकाम्यति । एव—वस्त्रकाम्यति । कन्याकाम्यति । कविकाम्यति । राजकाम्यति । इदकाम्यति । स्व काम्यति । अंतर्वर्त्तिन सुपमाश्रित्य पदसञ्ज्ञायां पदकार्ये नलादि । अपुत्रकाम्यत् । पुत्रकाम्येत् । पुत्रकाम्यतु । पुत्रकाम्यात् । पुत्रकाम्यात् । इति हलो य यमिति खमिति पक्षे यख । पुत्रकाम्यांचकार । अपुत्रकाम्यीत ।

९०२ ॥ हलो यः । ४ । ४ । ६४ । हलन्ताद्धोः परस्य यकारस्य खं । इतीह न भवति । पुत्रकाम्यिता । पुत्रकाम्यिष्यति । अपुत्रकाम्यिष्यत् । इत्यादि । सनि—

९०३ ॥ सुपः । ४ । ३ । १ । सुबन्तपवस्य धोर्यस्य कस्य चिद् एकाचा द्वे रूपे भवतः । इति द्वित्वे पाचरूप्य । पुपुत्रकाम्यिषति । पुत्रित्रिकाम्यिषति । पुत्रचिकाम्यिषति । पुत्रकामिम्यिषति । पुत्रकाम्यियिषति । एव—वस्त्रकाम्यतीत्यादिषु नेयं । यख्रस्य नास्ति । णिचि पुत्रकाम्ययति । दुडि—रुचि द्वित्वे चातुरूप्यं । अपुपुत्रकाम्यत् ।

अपुतत्रकाम्यत्। अपुत्रचकाम्यत्। अपुत्रकामम्यत। णावतो नाशादनक्ख इति निषेधात् सन्वद्भावो न भवति। तथा—पुत्रमिच्छत्यात्मन इति विग्रहे—

९०४ ॥ क्यजीप्सम: । २ । १ । ८ । स्वस्य सबधिन इवतादिच्छायामर्थे क्यज्वा स्यात् सा चेज्झिसझ्कान्मकारावाच न भवति। ककार "न· क्ये,, इति विशेपणार्थः। चकार सामान्यग्रहणाविघातार्थ। "ई ध्राम्यो·" "अस्य च्वौ इति चानुवर्तमाने—

९०५ ॥ क्याचि । ५ । २ । १५६ । गोरवर्णांतस्य ईकारो भवति क्याचि परतः। पुत्रीय इति स्थिते-पूर्ववल्लडादयः। पुत्रीयति। कन्यीयति।

९०६ ॥ न क्ये । १ । २ ।११७। नकारान्तस्य शब्दस्य क्ये परत पदसंज्ञा भवति। क्य इति क्यङ् क्यच् क्यपित्ततेषां निर्देपकाननुबन्धानपास्य सामान्येन ग्रहण। पदत्व नख। तत ईत्व। राजीयति। शर्म्मीयति। "दीरुच्यकृद्ग" इति दात्व। कत्रायति। शिवायति। तरुणीयति। दतिनायात। पुत्रिणीयति। इक्ष्रूयति। वधूयति। "रीङ् ऋत" इति रीङ्—पित्रीयति। "एचोऽयवायाव्" इति वर्तमाने—

९०७ ॥ त्रिय ले।४।३।७६। वचारातो य आदेशः स यथास्थाने भवति यकारादौ ले परत। गव्यति। नाव्यति। वाच्यति। ध्र्यति। सखियति। एतयाति। सुम्नयति। अलमयति। "लमी लयौ चंके' इति लमौ। लयति। मयति। "दीर्णोंग्युक:" इति वर्तत—

९०८ ॥ वा क्यः।४।४।५५। गोर्दउतान् परस्य क्यचूकृदरोर्यकारस्य ख वा भवत्यग परत। अशवान्, क्षवार्थीम्।

इत्यादि। सनि—द्विर्त्वे—चातुरूप्यं। पुपुत्रीयिषति। पुतित्रीयिषति। पुत्रीयियिषति। पुत्रीयिषिषति। णिचि—पुत्रीययति। लुङि—चङि—त्रैरूप्यं। अपुपुत्रीयत्। अपुतित्रीयत्। अपुत्रीययत्।

९०९॥ अचः। ४। ३। ३। धोः सुब्धोः परस्यादेरनादेश्च एकाचो द्वे रूप भवतः। अशिश्रीयियिषति। अश्वीयियिषति। अश्वीयिषिषति। इत्यादि नेय॥ प्रासादे इवाचरतीति विग्रहे—

९१०॥ गौणादीपश्चाचारे। २। १। ९। गौणादावता-दिवताद्याद्धिम त्याचारेऽर्थे वा क्यप् भवति। पूर्ववल्लुडादयः। प्रासादीयति कुट्यां। पर्यंकीयति मचके। अश्वीयति वृषभे। इत्यादि। पुत्रमिवाचरतीति पुत्रीयति; छात्रमाचार्यः। तल्पीयति किसलय। राजीयति सेवकमित्यादि। अथ इवाचरतीति विग्रहे—

९११॥ कर्तुः क्विः। २। १। १०। गौणादाचरण-क्रियायाः कर्तुराचारेऽर्थे क्विर्भवति वा। स च सर्वोऽप्रयोगात्। पूर्ववदुक्ते सुलुप्। ततो लडादयः। अश्वति गर्दभः। गर्दभन्त्यश्वः। हसति वकः। इत्यादि। गल्भ इवाचरतीति विग्रहे—

९१२॥ गल्भक्लीबहोडाड्डित्। २। १। ११। गल्भादिभ्यो गणेभ्यः कर्तृभ्य आचारेऽर्थे क्विर्डिद् भवति। डित्वादः। गल्भते। क्लीबते। होडते। इत्यादि। श्येनायते काकः। अश्वायते गर्दभः। एनीमाचरति एतायते। श्येनीव—श्येतायते। रोहिणीव रोहितायते। श्येन इवाचरतीति विग्रहे—

९१३॥ क्यङ् च। २। १। १२। गौणादाचारक्रियायाः कर्तुराचारेऽर्थे क्यङ् भवति। ककारः " नः क्ये,, इति विशेषणार्थ। ङकारो दार्थः। पूर्ववदीर्घादि। श्येनायते काकः। अश्वायते गर्दभः। एनीमाचरति एतायते। श्येनीव—श्येतायते। रोहिणीव—

रोहितायते । कुमारीव-कुमारायते वृद्धा । तरुणीव-तरुणायते जीर्णा । तपते । यपते । लपते । मपते । इत्यादि ।

९१४ ॥ सः खं वा । २ । १ ।१३। गौणादाचारार्थे क्यङ् भवति । सकारस्याते वर्तमानस्य ख वा भवति । पयायते, पयस्यते ।

९१५ ॥ अप्सरस. । २ । १ । १४ । अप्सरसः क्यङ्, सन्निधाने सकारस्य नित्य खं भवति । अप्सरायते ।

९१६ ॥ भृशादेश्च्वौ स्तः । २ । १ । १६ । भृशादेः कर्तु' च्व्यर्थे वर्तमानात् क्यङ् भवति । तत्सनियोगे सकारतकारांतस्य खं भवति । अभृशो भृशो भवति भृशायते । शीघ्रायते । उन्मनस्-उन्मनायते । वेहत्-वेहायते । इत्यादि । पटदित्यतो " द्विरचा-नेकाचाऽव्यक्तानुकरणाड्डाच्,, इति डाच् । " म्रो डाचि,, इति तकारस्य पररूप ।

९१७ ॥ डाच्लोहितादिभ्यः क्यप् । २ । १ । १७ । डाजतेभ्यो लोहितादिभ्यश्च कर्तृवाचिभ्य च्व्यर्थे क्यप् वा भवति ।

९१८ ॥ क्यपो वा । १ । २ । १०० । क्यपतात् म वा भवति । पटपटायति । पटपटायते । सिमसिमायते । सिमसिमायति । अलोहितो लोहितो भवति लोहितायति, लोहितायत । अचर्म चर्मवान् वा भवति--चर्मायति, चर्मायते इत्यादि । सुख भुंक्ते इति विगृह्य-

९१९ ॥ सुखादेर्भुजीप । २ । १ । १८ । सुखादेरिवतात् भुज्यर्थे क्यङ् भवति । क्यप् प्रकृत क्यङ न बाधते । सुखायते । दु खायत । कष्ट चिकीर्षति इति विग्रहे--

९२० ॥ कष्टकक्षकृच्छ्रसत्रगहनात् पापे चिकीर्षा । २ । १ । २० । कष्टादे पापेऽर्थे वर्तमानादीपतात् चिकीर्षत्यर्थे

क्यङ् भवति। कष्टायते। कक्षायते। पाप कर्तुमिच्छतीत्यर्थः। शब्दं करोतीति विग्रहे—

९२१॥ शब्दादेः कृञि। २।१।२१। शब्दादेरिन्तात् कृञ्यर्थे क्यङ् भवति। शब्दायते। वैरायते। हस्त निरस्यतीति विग्रहे—

९२२॥ निरस्यंगेभ्यो णिङ्।२।१।२९। अंगेभ्यः शरीरावयववाचिभ्यः इवतेभ्यो निरासे क्रियाया णिङ् भवति। णिचोऽपवादः। हस्तयते। पादयते। सूत्रं करोतीति विग्रहे—

९२३॥ मृदो घ्वर्थे णिच् बहुलं। २। १।२८। मृदो धात्वर्थे णिच् भवति बहुलं। णकारो "णौ" इति सामान्यग्रहणार्थः। चकारस्तदविघातार्थः। सुवुप्। "णाविष्ठवन्मृदः" इत्यतिदेशात्—तुरिष्ठेमेयस्सु टे", इति टिख। ततो उडादयः। सूत्रयति व्याकरणं। मडयति माणवकं। मिश्रीयत्योदनं। स्वच्छति वस्त्रं। लवणयति सूपं। जनयति पयः। कृतं गृह्णाति—कृतयति। तूस्तानि विहति वितूस्तयति। केशान् निजूटीकरोतीत्यर्थः। पाश विमोचयति विपाशयति। रूपं दर्शयति रूपयति। लोमान्यनुमार्ष्टि-अनुलोमयति। अन्वलुलोमत्। पटुमाचष्टे—पटयति। अपटीत्। वृक्षमाचष्टे—वृक्षयति। अववृक्षत्। मूलमाचष्टे-मूलयति। अमुमूलत्। वहीञ् प्रापणे "तः" इति क्त। "स्वच्छ्वादेः" इति साचो यण इक्। "हो ढः" इति ढत्व। "अध" इति तकारस्य धकारः। ष्टुत्व "ढो ढि" इति ढख। "ढ्रिंखेऽणः" इति दीर्घ। ऊढमाचचक्षे णिचि टिख। ऊढयति। लुङि कचि—द्वित्वं प्रति ढत्वादेरसिद्धत्वात् 'अचः' इति हि हि द्वित्व। चकार्य च। णित्व। "द्विर्वेऽचि" इति स्थानिवद्भावात् तणर्द्वित्वं। औजिढत्।

तृणान्युद्धृत्य शातयति—उत्तृणयति । वस्त्रेण समाच्छादयति—संवस्त्रयति । वीणया उपगायति—उपवीणयति । तूलैरनुकृष्णाति-अनुतूलयति । श्लोकैरुपस्तौति—उपश्लोकयति । सेनयाभियाति-अभिषेणयति । वर्मणा सनह्यति—संवर्मयति । चूर्णैरवकिरति अवध्वंसयति वा—अवचूर्णयति । पाशाच्छिनत्ति-पाशयति । अश्वेनाति-क्रामति—अत्यश्वयति । अतिहस्तयति । बहुलवचनात् इह न भवति । आख्यानमाचष्टे । इत्यादि सर्वत्र लकारेषु योज्यं ॥

इति सुवतप्रकृतिकाः ।

अथ शत्रादय: कर्तृकर्मभावेषु कर्मकर्तरि च उदाह्रियते "लटो वानितौ,, शतृशानौ,, इति वर्तमाने—

९२४ ॥ सल्लटः । २ । ४ । १३ । सति काले यो लट् तस्य शतृशानौ वा भवतोऽनितो परतः । "टो म,, इति मविषये शता।" इङन दः,, इति दविषये शानः । शकारः शित्कार्यार्थः ऋकारः उगित्कार्यार्थः । पूर्ववच्छवादि । भवदिति स्थितौ स्वादय । शत्राद्यता वाच्यलिंगत्वात्त्रिष्वपि लिंगेषु योज्याः । तत्र-पुंसि-भवान, भवंतौ, भवंतः । इत्यादि । नपि-भवत्, भवती, भवंति । इत्यादि । स्त्रियां—भवती, भवन्त्यौ, भवन्त्यः । इत्यादि ॥ व्यतिभू शान इति स्थिते—पूर्ववच्छवादौ कृते—

९२५ ॥ आने मुक् ।५।१।९९३ । गोरकारातादाने परतो मुगागमो भवति । उकारककारावितौ । व्यतिभवमानः । व्यतिभवमानौ । व्यतिभवमानाः । इत्यादि । व्यतिभवमान, व्यतिभवमाने, व्यतिभवमानानि । इत्यादि । व्यतिभवमाना, व्यतिभवमाने, व्यतिभवमानाः । इत्यादि ॥ एधमानः, एधमानौ, एधमानाः । पचन् । पचत् । पचती । पचमानः । पचमान । पचमाना । नदन् ।

नंदत् । नदंती । ध्वसमानः । ध्वसमानं । ध्वंसमाना । व्ययत् । व्ययत् । व्ययती । इत्यादि । "न धाद्,, इति नुमो निषेधः। जुह्वत्। जुह्वतो । " वा नपः,, इति ये वा नुम्। जुह्वन् । जुह्वती । जुह्वति, जुह्वति कुलानि। जुह्वती, जुह्वर्ती । उजिहानः । दधत् । अभिदधानः । अदन् । अदत् । अदती । भा दीप्तौ-भान्, भाद् । "शाम्नो-राद्,, इति वा नुम् । भाती । भाती । व्यपदानः । व्यपदानं । व्यपदाना । दायान । दायानं । दायाना । सुन्वन्, सुन्वत्, सुन्वती । सुगाण, नुगाण, नुगाणा । दीव्यन्, दीव्यत्, दीव्यंती । " शप्-श्याद्,, इति नित्य नुम् । व्यतिदीव्यानः ॥ प्रसूयमानः ३ । नह्यन् ३ । नह्यमानः ३ । सुन्वन् । सुन्वानः । अश्नुवानः । चिन्वन् । चिन्वानः । तुदन्, तुदमानः ३ । म्रियमाणः । मुचन् । मुचमानः । रुन्धन् । रुधानः ।भुञ्जानः । प्रयुञ्जन्, प्रयुंजानः । तन्वन्, तन्वानः । मन्वानः । कुर्वन्, कुर्वाणः । क्रीणान्, क्रीणानः । वृणानः । गृह्णन्, गृह्णानः। चोरयन् । छादयमानः । लक्षयन्, लक्षयमाणः । योजयन्, योजन् । अर्चयन् । अर्चयमानः । वारयन्, वारयमाणः । इत्यादि नेय । भावे—भूयमान देवदत्तेनेत्यादि । सर्वत्रैकवचनांतं नपुंसकलिंगमेव भवति । एध्यमानमस्माभिः । शय्यमान युवाभ्यामित्यादि ॥ कर्मणि-अभिभूयमानो भानू राहुणा । अभिभूयमानं कर्म ध्यानेन । अभिभूयमाना बुद्धिः कर्मणा । इत्यादि त्रिलिंग ॥ कर्मकर्तरि-अनुभूयमानः स्वयमेव । इत्यादि । ऌटि च-भविष्यन्, भविष्यत्, भविष्यती, भविष्यंती वा । इत्यादि । व्यतिभविष्यमाणः । इत्यादि॥ कौ-भविष्यमाण । इति । अभिभाविष्यमाण, अभिभविष्यमाणो देवदत्तो गुरुदत्तेनेत्यादि । तथा-एधिष्यमाणः । पक्ष्यन् ३ । पक्ष्यमाणः ३ । नदिष्यन् । इत्यादि । होष्यत् । व्यतिहोष्यमाणः । कौ-

हाविष्यमाण । होष्यमाणं । हास्यमानः । ञौ-हायिष्यमाणं । हास्यमान वा । श्रद्धास्यन् , श्रद्धास्यमानः । ञौ-श्रद्धायिष्यमाण, श्रद्धास्यमान वा। अत्स्यन् । अत्स्यत् । अत्स्यती, अत्स्यती वा । इत्यादि नेय।

९२६ ॥ लिटः क्वसुकानौ।२।२।१०३। धोः परस्य लिटः स्थाने क्वसु कानावादेशौ भवतः। क्वसुर्मसंज्ञः। कानो दसञ्ज्ञः। उकारः उगित्कार्यार्थः। ककारः कित्कार्यार्थः। क्वसौ दे नियमाद् इद् प्राप्तः।

९२७ ॥ क्वस्येकाच्घसः। ५। १ ।१११। आकारांतादेकाज् घस एव क्वसाविट् भवति नान्यत्र। इति नियमान्निषिद्धः। ततः स्वादयः। बभूवान्। बभूवांसौ, बभूवांसः। इत्यादि। शसादावजादौ-

९२८ ॥ वसोर्वस्योष् ।४।४।११२। गोर्भस्यावयवो यो वस् तस्य च यो वकारस्तस्य उशादेशो भवति। इत्युकारः। बभूवुषः। बभूवुषा। बभूवद्भ्या। बभूवद्भिरित्यादि। बभूवुषी। इत्यादि। *काने—व्यतिबभूवानः। इत्यादि।* ञौ—बभूवान देवदत्तेन। बभूवान इत्यादि। "हल्मध्ये लिट्यतः" इत्येत्वखे। ततः एकाच्त्वादिट्। पेचिवान्, पेचिवत्, पेचुषी। पेचानः। ननृद्वान्, ननृद्वत्, ननृदुषी। सिविविवान्, सिविविवत्, सिव्युषी। इत्यादि। जुहुवान्, जुहुवत्, जुहुवुषी। व्यतिजुहुवानः। जुहुवाचकृवान्। जुहुवाचकृवत्, जुहुवाचकुषी। व्यतिजुहुवाचक्राणः। "इटि चाखे" इत्याखे। अभिदधिवान्, अभिदधिवत्, अभिदधुषी। अभिदधान.। जक्षिवान्, जक्षिवत्, जक्षुषी। व्यतिजक्षाणः। ञौ—

ऊचिवान्, ऊचिवत्, ऊचुषी । ऊचानः ३ । ञौ-ऊचानं । दिदि-
वान् । दिदिवत् । दिदिवुषी । व्यतिदिदिवानः । संस्नेहिवान्, संस्ने-
हिवत् । संस्नेहुषी । संस्नेहिवानः । ३ । मुमुवान्, मुमुवत्, मुमुवुषी ।
मुमुवाणः । निश्चिचिवान्, निश्चिचिवत्, निश्चिच्युषी । निश्चिच्यानः
निश्चिक्रिवान्, निश्चिक्रिवत्, निश्चिक्र्युषी । निश्चिक्र्यानः । तुतुद्वान्,
तुतुद्वत्, तुतुदुषी । तुतुदानः । रुरुध्वान्, रुरुध्वत, रुरुधुषी । रुरु-
धानः । तेनिवान्, तेनिवत्, तेनुषी । तेनानः । चिक्रीवान्, चि-
क्रीवत्, चिक्रीयुषी । चिक्रीयाणः । चोरयाचकृवान्, चोरयांचकृवत्,
चोरयांचक्रुषी । व्यतिचोरयांचक्राणः । इत्यादि ॥ सनि—बुभू-
षन् । व्यतिबुभूषमाणः । बुभूष्यमाणं देवेन । अनुबुभूष्यमाणः ।
अनुबुभूष्यमाणः स्वयमेव । बुभूषांचकृवान् । व्यतिबुभूषांच-
क्राणः । इत्यादि । बुभूषांचक्राणं । अनुबुभूषांचक्राणः । बुभू-
षिष्यन् । व्यतिबुभूषिष्यमाणः । जुहूर्षन् । व्यतिजुहूर्षमाणः ।
जिघित्सन् । व्यतिजिघत्समानः । इत्यादि ॥ कर्तर्याने—बोभू-
यमानः । ञौ-बोभूय्यमानं देवेन । कर्मे—अनुबोभूय्यमानः । क-
र्तरि कर्मे—बोभूयाचक्राणः । ञौ—बोभूयांचक्राणं । अनुबोभूयां-
चक्राणः । बोभूयिष्यमाणः । ञौ—बोभूयिष्यमाणः । अनुबोभूयिष्य-
माणः । यङ्लुपि-इवादेशः । "न धाद्" इति नुममावः । बोभुवत्,
बोभुवती, बोभुवतः । इत्यादि । "वा नपः" इति वा नुम् । बोभु-
वत्, बोभुवती, बोभुवति, बोभुवति । इत्यादि । बोभुवती, बोभु-
वत्यौ, बोभुवत्यः । इत्यादि । बोभुवाचकृवान् । बोभुविष्यन् ।
णिचि-भावयन् । भावयमानः । ञौ-भाव्यमानं । भाव्यमानः ।
भावयमानः स्वयमेव । भावयांचकृवान् । भावयांचक्राणः । ञौ-
भावयांचक्राणं । भावयांचक्राणः । दापयन् । दापयमानः । ञौ—

हाव्यमानं । हाव्यमानः । हावयांचकृवान् । हावयांचक्राणः । डौ—हावयांचक्राणं । हावयांचक्राणः । हावयाचक्राणः । एव—धादयन् । देवयन् । सावयन् । तोदयन् । रोधयन् । तानयन् । क्रापयन् । चोरयन्नित्यादि नेय । यङ्लुगन्तणिजत–बोभूययन् । बोभूययमाणः । डौ—बोभूय्यमाण, बोभूय्यमाणः । कर्मकर्तरि–दधिर्पीत्यादिना यगभावः । बुभूपयाचक्राणः । डौ–बुभूपयाचक्राण । बुभूपयाचक्राणः । लृटि—बुभूपयिष्यन् । बुभूपयिष्यमाणः । डौ–बुभूपयिष्यमाण । इत्यादि । यङन्तणिजते-बोभूययन् । बोभूययमानः । डौ–बोभूययमान । बोभूययमानः । कर्मकर्तरि-यगभावः । बोभूययमानः स्वयमेव । बोभूययाचकृवान् । बोभूययांचक्राणः । डौ–बोभूययांचक्राणं । बोभूययाचक्राणः । बोभूययिष्यन् । बोभूययिष्यमाणः । बोभूययिष्यमाणः स्वयमेव ॥ यङ्लुगन्तणिजते–बोभावयत् । बोभावयमानः । डौ–बोभाव्यमान । बोभाव्यमानः । बोभावयमानः स्वयमेव । बोभावयिष्यन्नित्यादि । कंडूयंत् । कंडूयमानः । डौ–कंडूयमान । कंडूयमानः । कंडूयाचकृवान् । कंडूयाचक्राणः । डौ-कंडूयाचक्राणं । कंडूयाचक्राणः । कंडूयिष्यत् । कंडूयिष्यमाणः । इत्यादि च सविशेषमवसेय । इति शत्रादिपरिच्छेदः ।

नमः श्रीपूज्यपादाय लक्षणं यदुपक्रम ।
यदेवात्र तदन्यत्र यन्नात्रास्ति न तत्क्वचित् ।
इति प्रक्रियावतारे सिद्धिनिधि पंचमः ॥

विकारे मिड्वर्जिताः वक्ष्यमाणाख्याः कृत्संज्ञा भवति। इति अधिकारेण कृत्संज्ञा-कृतकर्तर्यसंज्ञिरिति प्रयोजन।

९३० ॥ प्राक् क्वेर्वाऽसमः। २। १। १००। क्वियां क्विरिति वक्ष्यते। प्रागेतस्मान् क्विशब्दनात् असमस्यो वा भवति। इत्यधिकारो वेदितव्यः। अपवादेन बाधितस्योत्सर्गस्य पुनरपवादविषये अनेन समावेशो निधीयते।

९३१ ॥ ण्वोर्व्याः। २। १। १०१। ण्वुतृजिति वक्ष्यते। प्रागेतस्मात् ण्वुमशब्दनात् वक्ष्यमाणा व्यसंज्ञा स्या भवति। तयोर्व्यक्त्वार्थ इति प्रयोजन।

९३२ ॥ तव्यानीयौ।२।१।१७२। धोः परतः तव्यानीय इत्येतौ स्तौ भवतः। ततः स्वादयः। भवितव्य। भवनीय पुंसा। एधितव्य, एधनीय निर्द्धिरित्यादि। अभिभवितव्यः। अभिभवनीयः शत्रुः। पक्तव्य, पचनीयः, ओदनः। हर्तव्या, हरणीया भूः। होतव्य, हवनीय हविः। अत्तव्य, अदनीयं घृतमित्यादि।

९३३ ॥ नशमस्जेर्झलि।५। १। ४०। नश् मस्ज इत्येतयोर्झलादौ से नुम् भवति। नंष्टव्य। नशनीय। मङ्क्तव्यं। मज्जनीय।

९३४ ॥ योऽचोऽप्वात्तु:। २। १। १०३। धोरजताद् यस्स्यो भवति प्यापवादः वा आमु रूकारात इत्येतान् वर्जयित्वा। स्तव्य। पून्-पव्य।

९३५ ॥ ईद् ये।४।४।६८। आकारान्तस्य गोरीकारादेशो भवति यन्ये परे। धेय। देय। आस्थेय। अनुनेय। निश्चेय। प्रहेय।

९३६॥ व्यिल्वे। ४। ३। ७३। यकारादौ स्ये एचो अवादयो भवंति। इत्यर्। भव्य हव्य। श्रव्य। स्तव्यं। पव्यं। इत्यादि।

हाव्यमानं । हाव्यमानः । हावयाचकृवान् । हावयाचक्राणः । ङौ— हावयांचक्राण । हावयाचक्राणः । हावयाचक्राणः । एव—आदयन् । देवयन् । सावयन् । तोदयन् । रोधयन् । लावयन् । क्नापयन् । चोरयन्नित्यादि नेय । यङन्तणिजन्त–बोभूषयन् । बोभूषयमाणः । ङौ—बोभूष्यमाण, बोभूष्यमाणः । कर्मकर्तरि–दधिर्णात्यादिना यगभावः । बुभूषयाचक्राणः । ङौ–बुभूषयाचक्राण । बुभूषयांचक्राण. । लृटि—बुभूषयिष्यन् । बुभूषयिष्यमाणः । ङौ–बुभूषयिष्यमाण । इत्यादि । यङन्तणिजन्ते–बोभूययन् । बोभूययमानः । ङौ–बोभूययमान । बोभूययमानः । कर्मकर्तरि–यगभावः । बोभूययमानः स्वयमेव । बोभूययाचकृवान् । बोभूययाचक्राणः । ङौ–बोभूययांचक्राण । बोभूययाचक्राणः । बोभूययिष्यन् । बोभूययिष्यमाणः । बोभूययिष्यमाणः स्वयमेव ॥ यङ्लुवन्तणिजन्ते–बोभावयन् । बोभावयमानः । ङौ-बोभाव्यमान । बोभाव्यमानः । बोभावयमानः स्वयमेव । बोभावयिष्यन्नित्यादि । कड्यन् । कड्यमानः । ङौ–कड्यमान । कड्यमानः । कड्याचकृवान् । कड्याचक्राणः । ङौ–कड्याचक्राण । कड्याचक्राणः । कड्यिष्यन् । कड्यिष्यमाणः । इत्यादि च सविशेषमवसेय । इति शत्रादिपरिच्छेदः ।

नमः श्रीपूज्यपादाय लक्षणं यदुपक्रम ।
यदेवात्र तदन्यत्र यन्नात्रास्ति न तत्क्वचित् ।
इति प्रक्रियावतारे सिद्धिविधि.पञ्चमः ॥

अथ कृदन्ताः प्रदर्श्यते ।
जिष्णोःकिरीटमाणिक्यादग्निकेजमलङ्कृत ।
भवादव्यटितश्चात रक्षलाजस्रमर्हतः ।

९२२ ॥ कृदमिङ् । २ । १ । ९९ । इतः प्रभृति धोर-

पिकारे भिद्धवर्जिताः वक्ष्यमाणास्त्याः कृत्संज्ञा भवंति। इति अधिकारेण कृत्सञ्ज्ञा—कृतकर्तर्यङ्गिरिति प्रयोजनं।

९३०॥ प्राक् क्तेर्वाऽसमः। २। १। १००। क्तिर्या क्तिरिति वक्ष्यते। प्रागेतस्मात् क्तिसंशब्दनात् असमस्तो वा भवति। इत्यधिकारो वेदितव्यः। अपवादेन बाधितस्योत्सर्गस्य पुनरपवादविषये अनेन समावेशो विधीयते।

९३१॥ ण्वोर्व्यः। २। १। १०१। ण्वुतृजिति वक्ष्यते। प्रागेतस्मात् ण्वुसशब्दनात् वक्ष्यमाणा व्यसंज्ञा स्या भवति। तयोर्व्यकरणार्थ इति प्रयोजनं।

९३२॥ तव्यानीयौ। २। १। १०२। धोः परतः तव्यानीय इत्येतौ स्यौ भवतः। ततः स्वादयः। भवितव्यं। भवनीयं पुंसा। एधितव्यं, एधनीयं विद्वद्भिरित्यादि। अभिभवितव्यः। अभिभवनीयः शत्रुः। पक्तव्यः, पचनीयः, ओदनः। हर्तव्या, हरणीया भूः। होतव्यं, हवनीयं हविः। अत्तव्यं, अदनीयं घृतमित्यादि।

९३३॥ नशमस्जोर्झलि। ५। १। ४०। नश् मस्ज इत्येतयोर्झलादौ स्ये नुम् भवति। नंष्टव्यं। नशनीयं। मङ्क्तव्यं। मज्जनीयं।

९३४॥ योऽचोऽप्यास्युः। २। १। १०३। धोरजन्ताद् यस्यो भवति प्यापनादः या आसु नकारात इत्येतान् वर्जयित्वा। दव्य। पूञ्-पव्य।

९३५॥ ईद् ये। ४। ४। ६८। आकारांतस्य धोरीकारादेशो भवति यस्ये परे। धेयं। देयं। आस्थेयं। अनुमेयं। ग्लेयं। प्रहेयं।

९३६॥ ध्यिरत्ये। ४। ३। ७६। यकारादौ स्ये एचो अवादयो भवंति। इत्यर्। भव्यं हव्यं। श्रव्यं। लव्यं। पव्यं। इत्यादि।

अम्बाल्युरिति किं ? यु मिश्रणे-याव्यं । पुञ् अभिषवे । आङ्पूर्वः । आसाव्य । कार्य । हार्य ।

९३७॥ पोरदुङोऽत्रपिवपिरापिलपित्रपिजपिजभिचामिदभेः । २ । १ । १०४ । त्रपादिवर्जितात् पवर्गान्तात् अकारोक्ते यत्यो भवति । शपौ क्रोशे-शप्य । लभ्य । गम्यं । रम्य । त्रपादिनिषेधः किं ? अपत्राप्य । डुवपौञ् बीजसंताने । वाप्य । रप लप व्यक्तायां वाचि । राप्यं । लाप्यं । जप मानसे च । जाप्यं । जभ मैथुने । जाम्य । चमु अदने । आचाम्यं । दभि सौत्रो धातुः । दाम्य ।

९३८ ॥ यतिचवितकिशकिशसिसद्यजेः । २ । १ । १०५ । यत् चत् तक् शक् शस् सद् यजि इत्येतेभ्यो यत्त्यो भवति । यतिञ् प्रयत्ने । यत्य । चतिञ् याचने । चत्य । तक हसने । तक्यं । शक्र शक्ने । शक्य । शस् हिंसायां । शस्यं । षद्दृ मर्षणे । सह्य । यजौञ् दानादौ । याज्य ।

९३९ ॥ गदमदयमोऽगेः ।२।१।१०६। गद मद यम इत्येतेभ्यो गिरहितेभ्यो यो भवति । गद्यं । मद्य । यम्य । अगेरिति किं ? निगाद्यं । प्रमाद्य । आयाम्यं ।

९४० ॥ चरेः ।२।१।१०७। चरेरगिपूर्वाद् यो भवति । व्यापवादः । चर्यं ।

९४१ ॥ आङ्गोऽगरौ ।२।१।१०८। आङ्पूर्वाच्चरेर्यो भवति।

